म० अद्राक्षीः । अद्राष्टम् । अद्राष्ट ॥ उ० अद्राक्षम् । अद्राक्ष्व । अद्राक्ष्म ॥ 10. लृङ् । अद्रक्ष्यत् ॥

[७४] सृ = गतौ । सक० । अनि० । to go; to move ; to flow. सार्वधातुके सरति इत्यादि । 5 लिट् । प्र० ससार । सस्रतुः । सस्रुः ॥ म० ससर्थ । सस्रथुः । सस्र ॥ उ० ससार-ससर । सस्रृव । सस्रृम॥ 6. लुट् । सर्ता ॥ सर्तासि ॥ 7. लृट् । सरिष्यति ॥ 8. आशी० । स्रियात् । स्रियास्ताम् ॥ 9. लुङ् । VI. प्र० असार्षीत् । असार्ष्टाम् । असार्षुः ॥ म० असार्षीः । असार्ष्टम् । असार्ष्ट ॥ उ० असार्षम् । असार्ष्व । असार्ष्म ॥ 10. लृङ् । असरिष्यत् ॥

[७५] घृ = सेचने । सक० । अनि० । पर० । to sprinkle. सृ (७४) धातुवत् । 5 लट् । घरति ॥ 5. लिट् । जघार । जघ्रतुः ॥

[७६] शद्लृ (शद्) = शातने । अक० । अनि० । to perish. अस्य सार्वधातुकलकारेषु शीय इत्यादेश आत्मनेपदं च । 1. लट् । प्र० शीयते । शीयेते । शीयन्ते ॥ म० शीयसे । शीयेथे । शीयध्वे ॥ उ० शीये । शीयावहे । शीयामहे ॥ 2. लोट् प्र० । शीयताम् । शीयेताम् । शीयन्ताम् ॥ म० शीयस्व । शीयेथाम् । शीयध्वम् ॥ उ० शीयै । शीयावहै । शीयामहै । 3. लङ् । प्र० अशीयत । अशीये-

ताम् । अशीयन्त ॥ म० अशीयथाः । अशीयेथाम् । अशीयध्वम् ॥ उ० अशीये । अशीयावहि । अशीयामहि ॥ 4. विधि० । प्र० शीयेत । शीयेयाताम् । शीयेरन् ॥ म० शीयेथाः । शीयेयाथाम् । शीयेध्वम् ॥ उ० शीयेय । शीयेवहि । शीयेमहि ॥ 5. लिट् । प्र० शशाद । शेदतुः । शेदुः ॥ म० शेदिथ–शशत्थ । शेदथुः । शेद ॥ उ० शशाद-शशद । शेदिव । शेदिम ॥ 6. लुट् । शत्ता ॥ 7. लृट् । शत्स्यति ॥ 8. आशी० । शद्यात् । शद्यास्ताम् ॥ 9. लुङ् । II. प्र० अशदत् । अशदताम् । अशदन् ॥ 10. लृङ् । अशत्स्यत् ॥

[७७] षद्लृ (सद्--सीद्) = विशरणगत्यवसादनेषु । गतौ सक० । अनि० । पर० । to divide; to break; to go; to despond! to be weary.

1. लट् । सीदति ॥ 2. लोट् । सीदतु-सीदतात् ॥ 3. लङ् । असीदत् ॥ 4. विधि० । सीदेत् ॥ आर्धधातुके ससाद । सेदतुः । इत्यादि शद्लृ (७६) धातुवत् रूपम् ॥

[७८] वस = निवासे । अक । अनि० । पर० । to dwell. सार्वधातुके वसति इत्यादि गद (२५) धातुवत् । 5. लिट् । प्र० उवास । ऊषतुः । ऊषुः ॥ म० उवसिथ-उवस्थ । ऊषथुः । ऊष ॥ उवास-उवस । ऊषिव । ऊषिम ॥ 6. लुट् ।

वस्ता । वस्तारौ ॥ म० वस्तासि ॥ 7. लृट् । वत्स्यति ॥ 8. आशी० । उष्यात् । उष्यास्ताम् ॥ 9. लुङ् । IV. प्र० अवात्सीत् । अवात्ताम् । अवात्सुः ॥ म० अवात्सीः । अवात्तम् अवात्त ॥ उ० अवात्सम् । अवात्स्व । अवात्स्म ॥ 10. लृङ् ॥ अवत्स्यत् ॥

[७९] पतॢ (पत्)=गतौ । अक० । सेट् । पर० । to fall. सार्वधातुके पतति इत्यादि गद (२५) धातुवत् ॥ 5. लिट् । प्र० पपात । पेततुः । पेतुः । म० पेतिथ । पेतथुः । पेत ॥ उ० पपात-पपत । पेतिव । पेतिम ॥ 6. लुट् । पतिता ॥ पतितासि ॥ 7. लृट् । पतिष्यति ॥ 8. आशी० पत्यात् । पत्यास्ताम् ॥ 9. लुङ् । II. प्र० अपप्तत् । अपप्तताम् । अपप्तन् ॥ म० अपप्तः । अपप्ततम् ॥ अपप्तत । उ० अपप्तम् । अपप्ताव । अपप्ताम ॥ 10. लृङ् । अपतिष्यत् ॥

[८०] गमॢ (गम् - गच्छ्)=गतौ । सक० । अनि० । पर० । to go. 1. लट् । गच्छति ॥ 2. लोट् । गच्छतु ॥ 3. लङ् । अगच्छत् ॥ 4. विधि० । गच्छेत् ॥ 5. लिट् । प्र० जगाम । जग्मतुः । जग्मुः ॥ म० जगमिथ—जगन्थ । जग्मथुः । जग्म ॥ उ० जगाम-जगम । जग्मिव । जग्मिम ॥ 6. लुट् । गन्ता । 7. लृट् । गमिष्यति ॥ 8. आशी० । गम्यात् । गम्यास्ताम् ॥ 9. लुङ् । II. प्र० अगमत् । अगमताम् । अगमन् ॥ म०

अगमः । अगमतम् । अगमत ॥ उ० अगमम् । अगमाव । अगमाम ॥ 10. लृङ् । अगमिष्यत् ॥

[८१] सृप्लृ (सृप्) = गतौ । अक० । अनि० । पर० । to go; to creep. सार्वधातुकलकारे सर्पति इत्यादि । 5. लिट् । प्र० ससर्प । सस्रपतुः । सस्रपुः ॥ म० ससर्पिथ । सस्रपथुः ॥ सस्रप । ससर्प । सस्रपिव । सस्रपिम ॥ 6. लुट् । स्रप्ता–सर्प्ता ॥ 7. लृट् । स्रप्स्यति–सर्प्स्यति ॥ 8. आशी० । सृप्यात् । सृप्यास्ताम् ॥ 9. लुङ् । II. प्र० असृपत् । असृपताम् ॥ 10. लृङ् । अस्रप्स्यत्–असर्प्स्यत् ॥

[८२] यम (यच्छ्) = उपरमे । अक० । अनि० । पर० । to check; to stop. सार्वधातुके यच्छति इत्यादि ॥ 5. लिट् । प्र० ययाम । येमतुः । येमुः ॥ म० येमिथ–ययन्थ । येमथुः । येम ॥ उ० ययाम–ययम । येमिव । येमिम ॥ 6. लुट् । प्र० यन्ता । यन्तारौ ॥ म० यन्तासि ॥ उ० यन्तास्मि ॥ 7. लृट् । यंस्यति ॥ 8. आशी० । यम्यात् । यम्यास्ताम् ॥ 9. लुङ् । IV. प्र० अयंसीत् । अयंसिष्टाम् । अयंसिषुः ॥ म० अयंसीः । अयंसिष्टम् । अयंसिष्ट ॥ उ० अयंसिषम् । अयंसिष्व । अयंसिष्म ॥ 10. लृङ् । अयंस्यत् ॥

[८३] णम (नम्) = प्रह्वत्वे शब्दे च । सक० । अनि० । पर० ।

to salute ; to bow to. 1. लट् । नमति इत्यादि ॥ 5. लिट् । प्र० ननाम । नेमतुः । नेमुः ॥ म० नेमिथ–ननन्थ । नेमथुः । नेम ॥ उ० ननाम–ननम । नेमिव । नेमिव ॥ 6. लुट् । नन्ता ॥ 7. लृट् नंस्यति ॥ 8. आशी० । नम्यात् । नम्यास्ताम् ॥ 9. लुङ् । IV. प्र० अनंसीत् । अनंसिष्टाम् । अनंसिषुः ॥ म० अनंसीः । अनंसिष्टम् । अनंसिष्ट ॥ उ० अनंसिषम् । अनंसिष्व । अनंसिष्म ॥ 10. लृङ् । अनंस्यत् ॥

[८४] क्रमु (क्रम्)=पादविक्षेपे । अक० । सेट् । पर० । to walk ; to step ; to go ; to cross. 1. लट् । क्रामति ॥ 2. लोट् । क्रामतु ॥ 3. लङ् । अक्रामत् । 4. विधि० । क्रामेत् ॥ पक्षे–सार्वधातुके श्यन् । 1. लट् । क्राम्यति ॥ 2. लोट् । क्राम्यतु ॥ 3. लङ् । अक्राम्यत् ॥ 4. विधि० । क्राम्येत् ॥ 5. लिट् । प्र० चक्राम । चक्रमतुः । चक्रमुः ॥ म० चक्रमिथ । चक्रमथुः । चक्रम ॥ उ० चक्राम–चक्रम । चक्रमिव । चक्रमिम ॥ 6. लुट् । क्रमिता ॥ 7. लृट् । क्रमिष्यति । 8. आशी० । क्रम्यात् । क्रम्यास्ताम् । क्रम्यासुः ॥ 9. लुङ् । VII. प्र० अक्रमीत् । अक्रमिष्टाम् । अक्रमिषुः ॥ म० अक्रमीः । अक्रमिष्टम् । अक्रमिष्ट ॥ उ० अक्रमिषम् । अक्रमिष्व । अक्रमिष्म ॥ 10. लृङ् । अक्रमिष्यत् ॥

अनुपसृष्टस्यास्य धातोः आत्मनेपदं वा भवति । तदाऽयमनिट् । क्रमते । क्रन्ता इत्यादि ॥

[८५] भ्रमु (भ्रम्)=चलने । अक० । सेट् । पर० । to roam about. 1. लट् । भ्रमति–भ्रम्यति ॥ 2. लोट् । भ्रमतु–तात –भ्रम्यतु–तात् ॥ 3. लङ् । अभ्रमत्–अभ्रम्यत ॥ 4. विधि० भ्रमेत्–भ्रम्येत् ॥ 5. लिट् । प्र० बभ्राम । बभ्रमतुः–भ्रेमतुः । बभ्रमुः–भ्रेमुः ॥ म० बभ्रमिथ–भ्रेमिथ । बभ्रमथुः–भ्रेमथुः । बभ्रम–भ्रेम ॥ उ० बभ्राम–बभ्रम । बभ्रमिव–भ्रेमिव । बभ्रमिम–भ्रेमिम ॥ 6. लुट् । प्र० भ्रमिता ॥ म० भ्रमितासि ॥ उ० भ्रमितास्मि ॥ 7. लृट्–भ्रमिष्यति ॥ 9. लुङ् । VII. अभ्रमीत् । अभ्रमिष्टाम् । अभ्रमिषुः ॥

[८६] क्षि = क्षये । अक० । अनि० । पर० । to decay; to waste. 1. लट् । क्षयति ॥ 2. लोट् । क्षयतु ॥ 3. लङ् । अक्षयत् ॥ 4. विधि० । क्षयेत् ॥ 5. लिट् । प्र० चिक्षाय । चिक्षियतुः । चिक्षियुः ॥ म० चिक्षयिथ–चिक्षेथ । चिक्षियथुः । चिक्षिय ॥ उ० चिक्षाय–चिक्षय । चिक्षियिव । चिक्षियिम ॥ 6. लुट् । क्षेता । क्षेतासि ॥ 7. लृट् । क्षेष्यति ॥ 8. आशी० । क्षीयात् । क्षीयास्ताम् ॥ 9. लुङ् । VI. प्र० अक्षैषीत् । अक्षैष्टाम् । अक्षैषुः ॥ म० अक्षैषीः । अक्षैष्टम् । अक्षैष्ट ॥ उ० अक्षैषम् । अक्षैष्व । अक्षैष्म ॥ 10. लृङ् । अक्षेष्यत् ॥

[८७] जि = जये । अकर्मकः—सकर्मकश्च । अनि० । पर० । to conquer; to overcome. जयति इत्यादि ॥ 5. लिट् । प्र० जिगाय । जिग्यतुः । जिग्युः ॥ म० जिगयिथ-जिगेथ । जिग्यथुः । जिग्य ॥ उ० जिगाय--जिगय । जिग्यिव । जिग्यिम ॥ 6. लुट् । जेता ॥ 7. लृट् । जेष्यति ॥ 8. आशी० । जीयात् । जीयास्ताम् ॥ 9. लुङ् । VI. प्र० अजैषीत् । अजैष्टाम् । अजैषुः ॥ म० अजैषीः । अजैष्टम् । अजैष्ट ॥ उ० अजैषम् । अजैष्व । अजैष्म ॥ 10. लृङ् अजेष्यत् ॥

[८८] षु (सु) = प्रसवैश्वर्ययोः । सकर्म०—अक० । अनि० । पर० । to bring forth; to possess power. 1. लट् । सवति ॥ 2. लोट् । सवतु ॥ 3. लङ् । असवत् ॥ 4. विधि० । सवेत् ॥ 5. लिट् । प्र० सुषाव । सुषुवतुः । सुषुवुः ॥ म० सुषविथ सुषोथ । सुषुवथुः । सुषुव ॥ उ० सुषाव-सुषव । सुषुविव । सुषुविम ॥ 6. लुट् । सोता । 7. लृट् । सोष्यति ॥ 8. आशी० । सूयात् । सूयास्ताम् ॥ 9. लुङ् । VII. प्र० असावीत । असाविष्टाम् । असाविषुः ॥ म० असावीः । असाविष्टम् । असाविष्ट ॥ उ० असाविषम् । असाविष्व । असाविष्म ॥ इडभावपक्षे—VI. प्र० असौषीत् । असौष्टाम् । असौषुः ॥ म० असौषीः । असौष्टम् । असौष्ट ॥ उ० असौषम । असौष्व । असौष्म ॥ 10. लृङ् । असोष्यत ॥

[८९] द्रु = गतौ । अक० । अनि० । पर० । to go; to flow; to run; to melt. 1. लट् । द्रवति ॥ 2. लोट् । द्रवतु ॥ 3. लङ् । अद्रवत् ॥ 4. विधि० । द्रवेत् ॥ 5. लिट् । प्र० दुद्राव । दुद्रुवतुः । दुद्रुवुः ॥ म० दुद्रोथ । दुद्रुवथुः । दुद्रुव ॥ उ० दुद्राव–दुद्रव । दुद्रुव । दुद्रुम ॥ 6. लुट् । द्रोता । 7. लृट् । द्रोष्यति ॥ 8. आशी० । द्रूयात् । द्रूयास्ताम् ॥ 9. लुङ् । III. प्र० अदुद्रुवत् । अदुद्रुवताम् । अदुद्रुवन् ॥ म० अदुद्रुवः । अदुद्रुवतम् । अदुद्रुवत ॥ उ० अदुद्रुवम् । अदुद्रुवाव । अदुद्रुवाम ॥ 10. लृङ् । अद्रोष्यत् ॥

[९०] स्रु = गतौ । अक० । सेट् । पर० । to go; to flow. सर्वं द्रु (८९) धातुवत् ॥

[९१] श्रु = श्रवणे । सक० । अनि० । पर० । to hear. 1. लट् । प्र० शृणोति । शृणुतः । शृण्वन्ति ॥ म० शृणोषि । शृणुथः । शृणुथ ॥ उ० शृणोमि । शृणुवः–शृण्वः । शृणुमः--शृण्मः ॥ 2. लोट् । प्र० शृणोतु-शृणुतात् । शृणुताम् । शृण्वन्तु ॥ म० शृणु—शृणुतात् । शृणुतम् । शृणुत ॥ उ० शृणवानि । शृणवाव । शृणवाम ॥ 3. लङ् । प्र० अशृणोत् । अशृणुताम् । अशृण्वन् ॥ म० अशृणोः । अशृणुतम् । अशृणुत ॥ उ० अशृणवम् । अशृणुव--अशृण्व ।

अशृणुम--अशृणम ॥ 4. विधि० । प्र० शृणुयात् । शृणुयाताम् । शृणुयुः ॥ म० शृणुयाः । शृणुयातम् ! शृणुयात ॥ उ० शृणुयाम् । शृणुयाव । शृणुयाम ॥ 5. लिट् । प्र० शुश्राव । शुश्रुवतुः । शुश्रुवुः ॥ म० शुश्रोथ । शुश्रुवथुः । शुश्रुव ॥ उ० शुश्राव-शुश्रव । शुश्रुव । शुश्रुम ॥ 6. लुट् । श्रोता ॥ 7. लृट । श्रोष्यति ॥ 8. आ शी० । श्रूयात् । श्रूयास्ताम् । श्रूयासुः ॥ 9. लुङ् । VI. प्र० अश्रौषीत् । अश्रौष्टाम् । अश्रौषुः ॥ म० अश्रौषीः । अश्रौष्टम् । अश्रौष्ट ॥ उ० अश्रौषम् । अश्रौष्व । अश्रौष्म ॥ 10. लृङ् । अश्रोष्यत् ॥

[९२] स्मृ=चिन्तायाम् । सक० । अनि० । पर० । to remember; to recollect; to think upon. स्मरति इत्यादि । 5. लिट् । प्र० सस्मार । सस्मरतुः । सस्मरुः ॥ म० सस्मर्थ । सस्मरथुः । सस्मर ॥ उ० सस्मार–सस्मर । सस्मरिव । सस्मरिम ॥ 9. लुङ् । VI. अस्मार्षीत् । अस्मार्ष्टाम् । अस्मार्षुः ॥ इत्यादि सृ (७४) धातुवत् ॥

[९३] तॄ=प्लवनतरणयोः । सक० । सेट् । पर० । to swim; to cross over; to float; to escape from. 1. लट् । तरति ॥ 2. लोट् । तरतु । 3. लङ् । अतरत् ॥ 4. विधि० । तरेत् ॥ 5. लिट् । प्र० ततार । तेरतुः । तेरुः ॥ म० तेरिथ । तेरथुः । तेर । उ० ततार–

ततर । तेरिव । तेरिम ॥ 6. लुट् । तरिता–तरीता ॥ 7. लृट् । तरिष्यति–तरीष्यति ॥ 8. आशी० । तीर्यात् । तीर्यास्ताम् । तीर्यासुः ॥ 9. लुङ् । VII. प्र० अतारीत् । अतारिष्टाम् । अतारिषुः ॥ म० अतारीः । अतारिष्टम् । अतारिष्ट ॥ उ० अतारिषम् । अतारिष्व । अतारिष्म ॥ 10. लृङ् । अतरिष्यत्-अतरीष्यत् ॥

[९४] तप = संतापे । सक० - अक० । अनि० । पर० । to shine; to be hot; to make hot. तपति इत्यादि । 5. लिट् । प्र० तताप । तेपतुः । तेपुः ॥ म० तेपिथ–ततप्थ । तेपथुः । तेप ॥ उ० तताप–ततप । तेपिव । तेपिम ॥ 6. लुट् । तप्ता ॥ 7. लृट् । तप्स्यति ॥ 8. आशी० । तप्यात् । तप्यास्ताम् ॥ 9. लुङ् । VI. प्र० अताप्सीत् । अताप्ताम् । अताप्सुः ॥ म० अताप्सीः । अताप्तम् । अताप्त ॥ उ० अताप्सम् । अताप्स्व । अताप्स्म ॥ 10. लृङ् । अतप्स्यत् ॥

[९५] त्यज = हानौ । सक० । अनि० । पर० । to abandon; to leave; to let go. त्यजति इत्यादि । 5. लिट् । प्र० तत्याज । तत्यजतुः । तत्यजुः ॥ म० तत्यजिथ–तत्यक्थ । तत्यजथुः । तत्यज ॥ उ० तत्याज–तत्यज । तत्यजिव । तत्यजिम ॥ 6. लुट् । त्यक्ता ॥

7. लृट्। त्यक्ष्यति ॥ 8. आशी०। त्यज्यात्। त्यज्यास्ताम् ॥ 9. लुङ्। VI. प्र० अत्याक्षीत्। अत्याक्ताम्। अत्याक्षुः ॥ म० अत्याक्षीः। अत्याक्तम्। अत्याक्त ॥ उ० अत्याक्षम्। अत्याक्ष्व। अत्याक्ष्म ॥ 10. लृङ्। अत्यक्ष्यत् ॥

[९६] षञ्ज (सञ्ज्) = सङ्गे। अक०। अनि०। पर०। to cling to; to fasten; to embrace. 1. लट्। सजति ॥ 2. लोट्। सजतु ॥ 3. लङ्। असजत ॥ 4. विधि०। सजेत ॥ 5. लिट्। प्र० ससञ्ज। ससञ्जतुः। ससञ्जुः ॥ म० ससञ्जिथ-ससङ्क्थ। ससञ्जथुः। ससञ्ज ॥ उ० ससञ्ज। ससञ्जिव। ससञ्जिम ॥ 6. लुट्। सङ्क्ता। 7. लृट्। सङ्क्ष्यति ॥ 8. आशी०। सज्यात्। सज्यास्ताम् ॥ 9. लुङ्। VI. प्र० असाङ्क्षीत् असाङ्क्ताम्। असाङ्क्षुः ॥ म० असाङ्क्षीः। असाङ्क्तम्। असाङ्क्त ॥ उ० आसाङ्क्षम्। असाङ्क्ष्व। असाङ्क्ष्म ॥ 10. लृङ्। असङ्क्ष्यत्। असङ्क्ष्यताम् ॥

[९७] दह = भस्मीकरणे। सक०। अनि०। पर०। to burn. 1. लट्। दहति। 2. लोट्। दहतु ॥ 3. लङ्। अदहत् ॥ 4. विधि०। दहेत् ॥ 5. लिट्। प्र० ददाह। देहतुः। देहः ॥ म० देहिथ-ददग्ध। देहथुः। देह ॥ उ०

दहाह-ददह । देहिव । देहिम ॥ 6. लुट् । दग्धा ॥ 7. लृट् । धक्ष्यति ॥ 8. आशी० । दह्यात् । दह्यास्ताम् ॥ 9. लुङ् । VI. प्र० अधाक्षीत् । अदाग्धाम् । अधाक्षुः ॥ म० अधाक्षीः । अदाग्धम् । अदाग्ध ॥ उ० अधाक्षम् । अधाक्ष्व । अधाक्ष्म ॥ 10. लृङ् । अधक्ष्यत् ॥

[९८] मिह = सेचने । सक० । अनि० । पर० । to sprinkle; to wet. 1. लट् । मेहति ॥ 2. लोट् । मेहतु ॥ 3. लङ् । अमेहत् ॥ 4. विधि० । मेहेत् ॥ 5. लिट् । प्र० मिमेह । मिमिहतुः । मिमिहुः ॥ म० मिमेहिथ । मिमिहथुः । मिमिह ॥ उ० मिमेह । मिमिहिव । मिमिहिम ॥ 6. लुट् । प्र० मेढा । मेढारौ ॥ म० मेढासि ॥ उ० मेढास्मि ॥ 7. लृट् । मेक्ष्यति ॥ 8. आशी० । मिह्यात् । मिह्यास्ताम् ॥ 9. लुङ् । V. प्र० अमिक्षत् । अमिक्षताम् । अमिक्षन् ॥ म० अमिक्षः । अमिक्षतम् । अमिक्षत ॥ उ० अमिक्षम् । अमिक्षाव । अमिक्षाम ॥ 10. लृङ् । अमेक्ष्यत् ॥

[९९] रुह = बीजजन्मनि प्रादुर्भावे च । अक० । अनि० । पर० । to grow from seed; to become manifest; to rise. रोहति इत्यादि । 5. लिट् । प्र० रुरोह । रुरुहतुः । रुरुहुः ॥ म० रुरोहिथ । रुरुहथुः । रुरुह ॥ उ० रुरोह । रुरुहिव । रुरुहिम ॥ 6. लुट् । रोढा । रोढारौ ॥

7. लृट्। रोक्ष्यति॥ 8. आशी०। रुह्यात्। रुह्यास्ताम्॥ 9. लुङ्। V. प्र० अरुक्षत्। अरुक्षताम्। अरुक्षन्॥ म० अरुक्षः। अरुक्षतम्। अरुक्षत॥ उ० अरुक्षम्। अरुक्षाव। अरुक्षाम॥ 10. लृङ्। अरोक्ष्यत॥

[१००] स्कन्दिर् (स्कन्द्) = गतिशोषणयोः। सक०। अनि०। पर०। to go; to be dry. 1. लट्। स्कन्दति॥ 2. लोट्। स्कन्दतु॥ 3. लङ्। अस्कन्दत्॥ 4. विधि०। स्कन्देत्। 5. लिट्। प्र० चस्कन्द। चस्कन्दतुः। चस्कन्दुः॥ म० चस्कन्दिथ-चस्कन्थ। चस्कन्दथुः। चस्कन्द॥ उ० चस्कन्द। चस्कन्दिव। चस्कन्दिम॥ 6. लुट्। स्कन्ता॥ 7. लृट्। स्कन्त्स्यति॥ 8. आशी०। स्कद्यात्। स्कद्यास्ताम्॥ 9. लुङ्। II. प्र० अस्कदत्। अस्कदताम्। अस्कदन्॥ म० अस्कदः। अस्कदतम्। अस्कदत॥ उ० अस्कदम्। अस्कदाव। अस्कदाम॥ पक्षे-VI. प्र० अस्कान्त्सीत्। अस्कान्ताम्। अस्कान्त्सुः॥ म० अस्कान्त्सीः। अस्कान्तम्। अस्कान्त॥ उ० अस्कान्त्सम्। अस्कान्त्स्व। अस्कान्त्स्म॥ 10. लृङ्। अस्कन्त्स्यत॥

[१०१] टु ओ श्वि (श्वि) = गतिवृद्ध्योः। अक०। सेट्। पर०। to move; to increase; to grow; to swell. 1. लट्। श्वयति॥ 2. लोट्। श्वयतु॥ 3. लङ्। अश्वयत्॥ 4. विधि०। श्वयेत्॥ 5. लिट्। प्र० शुशाव।

शुशुवतुः । शुशुवुः । म० शुशविथ--शुशोथ । शुशुवथुः । शुशुव ॥ उ० शुशाव--शुशव । शुशुविव । शुशुविम ॥ पक्षे-प्र० शिश्वाय । शिश्वियतुः । शिश्वियुः ॥ म० शिश्वयिथ । शिश्वियथुः । शिश्विय ॥ उ० शिश्वाय-शिश्वय । शिश्वि-यिव । शिश्वियिम ॥ 6. लुट् । श्वयिता ॥ 7. लृट् । श्वयिष्यति ॥ 8. आशी० । शूयात् । शूयास्ताम् ॥ 9. लुङ् । II. प्र० अश्वत् । अश्वताम् । अश्वन ॥ म० अश्वः । अश्वतम् । अश्वत ॥ उ० अश्वम् । अश्वाव । अश्वाम ॥ चङ् पक्षे—III. प्र० अशिश्वियत् । अशि-श्वियताम् । अशिश्वियन् ॥ म० अशिश्वियः । अशिश्वियतम् । अशिश्वियत ॥ उ० अशिश्वियम् । अशिश्वियाव । अशि-श्वियाम ॥ अथवा—VII. प्र० अश्वयीत् । अश्वयिष्टाम् । अश्वयिषुः ॥ म० अश्वयीः । अश्वयिष्टम् । अश्वयिष्ट ॥ उ० अश्वयिषम् । अश्वयिष्व । अश्वयिष्म ॥ 10. लृङ् । अश्व-यिष्यत् ॥

[१०२] स्वृ = शब्दोपतापयोः । अक० । वेट् । पर० । to sound; to pain. 1. लट् । स्वरति । 2. लोट् । स्वरतु ॥ 3. लङ् । अस्वरत् ॥ 4. विधि० । स्वरेत् ॥ 5 लिट् । प्र० सस्वार । सस्वरतुः । सस्वरुः ॥ म० सस्वरिथ—सस्वर्थ । सस्वरथुः । सस्वर ॥ उ० सस्वार-सस्वर । सस्वरिव । सस्वरिम ॥ 6. लुट् । स्वर्ता—स्वरिता ॥

7. लृट् । स्वरिष्यति ॥ 8. आशी० स्वर्यात् । स्वर्यास्ताम् ॥ 9. लुङ् । VII. प्र० अस्वारीत् । अस्वारिष्टाम् । अस्वारिषुः ॥ म० अस्वारीः । अस्वारिष्टम् । अस्वारिष्ट ॥ उ० अस्वारिषम् । अस्वारिष्व । अस्वारिष्म ॥ पक्षे—VI. प्र० अस्वार्षीत् । अस्वार्ष्टाम् । अस्वार्षुः ॥ म० अस्वार्षीः । अस्वार्ष्टम् । अस्वार्ष्ट ॥ उ० अस्वार्षम् । अस्वार्ष्व । अस्वार्ष्म ॥ 10. लृङ् । अस्वरिष्यत् ॥

[१०३] ह्वृ = कौटिल्ये । अक० । अनि० । पर० । to be crooked; to deceive. स्मृ (९२) धातुवत् ॥

इति भ्वादौ परस्मैपदिनः ।

# अथ भ्वादावात्मनेपदिनः ।

दशानां लकाराणां परिनिष्ठिताः प्रत्ययाः प्रदर्श्यन्ते ॥ 1. लट्-
प्र० ते । इते । अन्ते ॥ म० से । इथे । ध्वे ॥ उ० इ ।
वहे । महे ॥ 2. लोट्-प्र० ताम् । इताम् । अन्ताम् ॥ म०
स्व । इथाम् । ध्वम् ॥ उ० ऐ । आवहै । आमहै ॥ 3. लङ् ।
प्र० त । इताम् । अन्त ॥ म० थास् । इथाम् । ध्वम् ॥
उ० इ । वहि । महि ॥ 4. विधि० । प्र० ईत । ईया-
ताम् । ईरन् । म० ईथाः । ईयाथाम् । ईध्वम् ॥ उ०
ईय । ईवहि । ईमहि ॥ 5. लिट् । प्र० ए । आते । इरे ॥
म० से । आथे । ध्वे ॥ उ० ए । वहे । महे ॥ 6. लुट् ।
प्र० ता । तारौ । तारः । म० तासे । तासाथे । ताध्वे ॥
उ० ताहे । तास्वहे । तास्महे ॥ 7. लृट् । प्र० स्यते ।
स्येते । स्यन्ते ॥ म० स्यसे । स्येथे । स्यध्वे ॥ उ० स्ये ।
स्यावहे । स्यामहे ॥ 8. आशी० । प्र० सीष्ट । सीया-
स्ताम् । सीरन् ॥ म० सीष्ठाः । सीयास्थाम् । सीध्वम् ॥
उ० सीय । सीवहि । सीमहि ॥ 9. लुङ् । प्रत्ययाः
पञ्चविधाः—

VIII. परस्मैपदमारभ्य अष्टमी विधा च्लेर[illegible]शेन । प्र० त । इताम् । अन्त ॥ म० थास् । इथाम् । ध्वम् ॥ उ० इ । वहि । महि ॥

**उदाहरणम्**—प्र० अवोचत । अवोचेताम् । अवोचन्त ॥ म० अवोचथाः । अवोचेथाम् । अवोचध्वम् ॥ उ० अवोचे । अवोचावहि । अवोचामहि ॥

IX. **नवमी विधा** च्लेश्चङादेशेन । प्रत्ययाः पूर्ववत् । विशेषस्तु धातोरत्र द्वित्वम् ।

**उदाहरणम्**—गदव्यक्तायां वाचि इत्यस्मात् णिचि । प्र० अजीगदत । अजीगदेताम् । अजीगदन्त ॥ म० अजीगदथाः । अजीगदेथाम् । अजीगदध्वम् ॥ उ० अजीगदे । अजीगदावहि । अजीगदामहि ॥

X. **दशमी विधा** । अनिड्भ्यो धातुभ्यः च्लेः सिजादेशेन । प्र० स्त । साताम् । सत ॥ म० स्थाः । साथाम् । ध्वम् ॥ उ० । सि । स्वहि । स्महि ॥

**उदाहरणम्**—डु पचष् = पाके । प्र० अपक्त । अपक्षाताम् । अपक्षत ॥ म० अपक्थाः । अपक्षाथाम् । अपग्ध्वम् ॥ उ० अपक्षि । अपक्ष्वहि । अपक्ष्महि ॥

XI. **एकादशी विधा** । सेड्भ्यो धातुभ्यः च्लेः सिजादेशेन । प्र० इष्ट । इषाताम् । इषत ॥ म० इष्ठाः । इषाथाम् ।

इध्वम् ॥ इषि । इष्वहि । इष्महि ॥

**उदाहरणम्**—प्र० अगाधिष्ट । अगाधिषाताम् । अगाधिषत ॥ म० अगाधिष्ठाः । अगाधिषाथाम् । अगाधिध्वम्–ढ्वम् ॥ उ० अगाधिषि । अगाधिष्वहि । अगाधिष्महि ॥

XII. **द्वादशी विधा** । अनिड्भ्यो धातुभ्यः च्लेः क्सादेशेन । प्र० सत । साताम् । सन्त ॥ म० सथाः । साथाम् । सध्वम् ॥ उ० सि । सावहि । सामहि ॥

**उदाहरणम्**—प्र० दिश=अतिसर्जने । अदिक्षत । अदिक्षाताम् । अदिक्षन्त ॥ म० अदिक्षथाः । अदिक्षाथाम् । अदिक्षध्वम् ॥ उ० अदिक्षि । अदिक्षावहि । अदिक्षामहि ॥

10. लृङ् । प्र० स्यत । स्येताम् । स्यन्त ॥ म० स्यथाः । स्येथाम् । स्यध्वम् ॥ उ० स्ये । स्यावहि । स्यामहि ॥

# अथ भ्वादौ आत्मनेपदिनः ।

[१०४] एध = वृद्धौ । अक० । सेट् । आत्मनेपदी । to grow; to increase; to prosper; to rise. 1. लट् । प्र० एधते । एधेते । एधन्ते ॥ म० एधसे । एधेथे । एधध्वे ॥ उ० एधे । एधावहे । एधामहे ॥ 2. लोट् । प्र० एधताम् । एधेताम् । एधन्ताम् ॥ म० एधस्व । एधेथाम् । एधध्वम् ॥ उ० एधै । एधावहै । एधामहै ॥ 3. लङ् । प्र० ऐधत । ऐधेताम् । ऐधन्त ॥ म० ऐधथाः । ऐधेथाम् । ऐधध्वम् ॥ उ० ऐधे । ऐधावहि । ऐधामहि ॥ 4. विधि० । प्र० एधेत । एधेयाताम् । एधेरन् ॥ म० एधेथाः । एधेयाथाम् । एधेध्वम् ॥ उ० एधेय । एधेवहि । एधेमहि ॥ 5. लिटि कृञ्धातोरनुप्रयोगे—प्र० एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे ॥ म० एधाञ्चकृषे । एधाञ्चक्राथे । एधाञ्चकृढ्वे ॥ उ० एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे ॥ भूधातोरनुप्रयोगे—प्र० एधांबभूव । एधांबभूवतुः । एधांबभूवुः ॥ म० एधांबभूविथ । एधांबभूवथुः । एधांबभूव ॥ उ० एधांबभूव । एधांबभूविव । एधांबभूविम ॥ असधातोरनुप्रयोगे—प्र०

एधामास । एधामासतुः एधामासुः ॥ म० एधामासिथ । एधामासथुः । एधामास ॥ उ० एधामास । एधामासिव । एधामासिम ॥ 6. लुट् । प्र० एधिता । एधितारौ । एधितारः ॥ म० एधितासे । एधितासाथे । एधिताध्वे ॥ उ० एधिताहे । एधितास्वहे । एधितास्महे ॥ 7. लृट् । प्र० एधिष्यते । एधिष्येते । एधिष्यन्ते ॥ म० एधिष्यसे । एधिष्येथे । एधिष्यध्वे ॥ उ० एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥ 8. आशी० । प्र० एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् ॥ म० एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् ॥ उ० एधिषीय । एधिषीवहि । एधिषीमहि ॥ 9. लुङ् । XI. प्र० ऐधिष्ट । ऐधिषाताम् । ऐधिषत ॥ म० ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम्—ध्वम् ॥ उ० ऐधिषि । ऐधिष्वहि । ऐधिष्महि ॥ 10. लृङ् । प्र० ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त ॥ म० ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम ॥ उ० ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥

[१०५] एजृ (एज्) = दीप्तौ । अक० । सेट् । आत्म० । to shine एध (१०४) धातुवत् ॥ 1. लट् । एजते ॥ 3. लङ् । ऐजत ॥ 5. लिट् । एजांचक्रे ॥

[१०६] ईज = गतिकुत्सनयोः । सक० । सेट् । आ० । to go;

to censure. एध (१०४) धातुवत्। 1. लट्। ईजते 3. लङ्। ऐजत ॥ 5. लिट्। ईजांचक्रे ॥ 9. लुङ्। ऐजिष्ट ॥ 10. लृङ्। ऐजिष्यत ॥

[१०७] ईह = चेष्टायाम्। अक०। सेट्। आत्म०। to endeavour; to wish; to aim at. एध (१०४) धातुवत्। 3. लङ्। ऐहत ॥ 5. लिट्। ईहांचक्रे ॥ 9. लुङ्। XI. ऐहिष्ट ॥ 10. लृङ्। ऐहिष्यत ॥

[१०८] ऊह = वितर्के। सक०। सेट्। आ०। to guess; to reason. एध (१०४) धातुवत्। 3. लङ्। औहत ॥ 5. लिट्। ऊहांचक्रे ॥ 9. लुङ्। XI. औहिष्ट ॥ 10. लृङ्। औहिष्यत ॥

[१०९] मुद = हर्षे। अक०। सेट्। आत्म०। to rejoice; to be glad. 1. लट्। मोदते ॥ 2. लोट्। मोदताम् ॥ 3. लङ्। अमोदत ॥ 4. विधि०। मोदेत ॥ 5. लिट्। प्र० मुमुदे। मुमुदाते। मुमुदिरे ॥ म० मुमुदिषे। मुमुदाथे। मुमुदिध्वे ॥ उ० मुमुदे। मुमुदिवहे। मुमुदिमहे ॥ 6. लुट्। प्र० मोदिता ॥ 7. लृट्। मोदिष्यते ॥ 8. आशी०। प्र० मोदिषीष्ट। मोदिषीयास्ताम्। मोदिषीरन् ॥ म० मोदिषीष्ठाः। मोदिषीयास्थाम्। मोदिषीध्वम् ॥ उ० मोदिषीय। मोदिषीवहि। मोदिषीमहि ॥ 9. लुङ्। XI.

प्र० अमोदिष्ट । अमोदिषाताम् । अमोदिषत ॥ म० अमोदिष्ठाः । अमोदिषाथाम् । अमोदिध्वम्--ढ्वम् ॥ उ० अमोदिषि । अमोदिष्वहि । अमोदिष्महि ॥ 10. लृङ् । प्र० अमोदिष्यत । अमोदिष्येताम् । अमोदिष्यन्त ॥ इत्यादि ॥

[११०] रुच = दीप्तौ । अक० । सेट् । आत्म० । to shine; to be pleased. मुद (१०९) धातुवत् ॥ रोचते ॥ रुरुचे ॥

[१११] शुभ = दीप्तौ । अक० । सेट् । आत्म० । to shine. मुद (१०९) धातुवत् । शोभते ॥ शुशुभे ॥

[११२] कुक = आदाने । सक० । सेट् । आत्म० । to take. लट् । कोकते । मुद (१०९) धातुवत् 5. लिट् । चुकुके ॥ 9. लुङ् । XI. अकोकिष्ट ॥

[११३] ष्टुभु (स्तुभ्) = स्तंभे । अक० । सेट् । आत्म० । to stop मुद (१०९) धातुवत् ॥ 1. लट् । स्तोभते ॥ 5. लिट् । तुष्टुभे ॥ 9. लुङ् । अस्तोभिष्ट ॥

[११४] द्युत = दीप्तौ । अक० । सेट् । आत्म० । to shine; to be bright. 1. लट् । द्योतते ॥ 2. लोट् । द्योतताम् ॥ 3. लङ् । अद्योतत ॥ 4. विधि० । द्योतेत ॥ 5. लिट् । प्र० दिद्युते । दिद्युताते । दिद्युतिरे ॥ म० दिद्युतिषे । दिद्युताथे । दिद्युतिध्वे ॥ उ० दिद्युते । दिद्युतिवहे । दिद्युतिमहे ॥ 6. लुट् । द्योतिता ॥ 7. लृट् । द्योतिष्यते ॥

8. आशी० । द्योतिषीष्ट ॥ 9. लुङ् । XI. अद्योतिष्ट । अद्योतिषाताम् । अद्योतिषत ॥ पक्षे–II. अद्युतत् । अद्युतताम् । अद्युतन् ॥ 10. लृङ् । अद्योतिष्यत ॥

[११५] **वदि** (वन्द्) = अभिवादनस्तुत्योः । सक० । सेट् । आत्म० । to salute ; to praise. 1. लट् । वन्दते । वन्देते । वन्दन्ते ॥ 2. लोट् । वन्दताम् ॥ 3. लङ् । अवन्दत ॥ 4. विधि० । वन्देत ॥ 5. लिट् । प्र० ववन्दे । ववन्दाते । ववन्दिरे ॥ म० । ववन्दिषे । ववन्दाथे । ववन्दिध्वे ॥ उ० । ववन्दे । ववन्दिवहे । ववन्दिमहे ॥ 6. लुट् । प्र० वन्दिता ॥ म० वन्दितासे ॥ उ० वन्दिताहे ॥ 7. लृट् । वन्दिष्यते ॥ 8. आशी० । वन्दिषीष्ट । वन्दिषीयास्ताम् । वन्दिषीरन् ॥ 9. लुङ् । XI. प्र० अवन्दिष्ट । अवन्दिषाताम् । अवन्दिषत ॥ म० अवन्दिष्ठाः । अवन्दिषाथाम् । अवन्दिध्वम्–ढ्वम् ॥ उ० अवन्दिषि । अवन्दिष्वहि । अवन्दिष्महि ॥ 10. लृङ् । अवन्दिष्यत ॥

[११६] **भदि** (भन्द्) = कल्याणे सुखे च । अक० । सेट् । आत्म० । to be prosperous ; to be glad. **वदिं** (११५) धातुवत् ॥ भन्दते ॥ बभन्दे ॥

[११७] **मदि** (मन्द्) = स्तुतिमोदमदस्वप्नकान्तिगतिषु । सक० । अक० । सेट् । आत्म० । to praise ; to be glad ; to

sleep; to shine; to move slowly. वदि (११५) धातुवत् ॥ मन्दते ॥ ममन्दे ॥

[११८] स्पदि = (स्पन्द्) – किञ्चिच्चलने । अक० । सेट् । आत्म० । to throb वदि (११५) धातुवत ॥ स्पन्दते ॥ पस्पन्दे ॥

[११९] स्पर्ध = संघर्षे । अक० । सेट् । आत्म० । to contend with; to challenge. वदि (११५) धातुवत् । स्पर्धते ॥ 5. लिट् । पस्पर्धे ॥ 9. लुङ् । XI. अस्पर्धिष्ट ॥

[१२०] दद=दाने । सक० । सेट् । आत्म० । to give; to offer. वदि (११५) धातुवत । ददते ॥ ददेते । ददन्ते ॥ 5. लिट् । प्र० ददेदे । ददेदाते । ददेदिरे ॥ म० ददेदिषे । ददेदाथे । ददेदिध्वे ॥ उ० ददेदे । ददेदिवहे । ददेदिमहे ॥ 9. लुङ् । XI. अददिष्ट ॥ म० अददिध्वम्–ढ्वम् ॥

[१२१] दध = धारणे । सक० । सेट् । आत्म० । to hold; to possess. लट् । दधते । 5. लिट् । प्र० देधे । देधाते । देधिरे ॥ म० देधिषे । देधाथे । देधिध्वे ॥ उ० देधे । देधिवहे । देधिमहे ॥ 9. लुङ् । XI. प्र० अदधिष्ट ॥ म० अदधिढ्वम्–ध्वम् ॥

[१२२] दय = दान-गति-रक्षण-हिंसाऽऽदानेषु । सक० । सेट् । आत्म० । to pity · to give; to go; to protect;

to kill; to take. दध (१२१) धातुवत्। 5. लिट्।
दयांचक्रे। दयामास। दयांबभूव॥ इति विशेषः।

[१२३] अय=गतौ। सक०। सेट्। आत्म०। to go. दध
(१२१) धातुवत्। 1. लट्। अयते॥ 2. लोट्। अय-
ताम्॥ 3. लङ्। आयत॥ 4. विधि०। अयेत॥
5. लिट्। अयांचक्रे॥ 8. आशी०। अयिषीष्ट॥ 9.
लुङ्। XI. आयिष्ट॥ म० आयिषीध्वम्--ढ्वम्॥

[१२४] चक=तृप्तौ प्रतिघाते च। सक०। सेट्। आत्म०।
to be satisfied; to repel; to resist; to shine
दध (१२१) धातुवत्॥ लट्। चकते॥ 5 लिट्। चेके॥

[१२५] वल=संवरणे संचरणे च। सक०। सेट्। आत्म०।
to cover; to move. दध (१२१) धातुवत्। विशेष-
स्तु॥ 5. लिट्। ववले। ववलाते। ववलिरे। इत्यादि
दद (१२०) धातुवत्॥

[१२६] कत्थ=श्लाघायाम्। सक०। सेट्। आत्म०। to
praise; to boast; to flatter. 1. लट्। कत्थते॥
2. लोट्। कत्थताम्॥ 3. लङ्। अकत्थत॥ 4. विधि०।
कत्थेत॥ 5. लिट्। चकत्थे। चकत्थाते। चकत्थिरे॥
9. लुङ्। XI. अकत्थिष्ट॥ म० अकत्थिध्वम्--ढ्वम्॥

[१२७] वर्च=दीप्तौ। अक०। सेट्। आत्म०। to shine.

1. लट्। वर्चते ॥ 2. लोट्। वर्चताम् ॥ 3. लङ् अवर्चत ॥ 4. विधि०। वर्चेत ॥ 5. लिट्। ववर्चे। ववर्चाते। ववर्चिरे ॥ 9. लुङ्। XI. अवर्चिष्ट ॥

[१२८] गाधृ (गाध्) = प्रतिष्ठालिप्सयोर्ग्रन्थे च। सक०। सेट्। आत्म०। to set out for; to dine; to seek; to compile; to string together. 1. लट्। गाधते ॥ 2. लोट्। गाधताम् ॥ 3. लङ्। अगाधत ॥ 4. विधि०। गाधेत ॥ 5. लिट्। प्र० जगाधे। जगाधाते। जगाधिरे ॥ म० जगाधिषे। जगाधाथे। जगाधिध्वे ॥ उ० जगाधे। जगाधिवहे। जगाधिमहे ॥ 6. लुट्। गाधिता ॥ 7. लृट्। गाधिष्यते ॥ 8. आशी०। गाधिषीष्ट ॥ 9. लुङ्। XI. प्र० अगाधिष्ट ॥ म० अगाधिष्ठाः। अगाधिध्वम् – ढ्वम् ॥ 10. लृट्। अगाधिष्यत ॥

[१२९] बाधृ (बाध्) = लोडने। सक०। सेट्। आत्म०। to oppress; to torment. बाधते ॥ बबाधे ॥ गाधृ (१२८) धातुवत् ॥

[१३०] भ्राजृ (भ्राज्) = दीप्तौ। अक०। सेट्। आत्म०। to shine. लट्। भ्राजते। 5. लिट्। बभ्राजे। इत्यादि गाधृ (१२८) धातुवत् ॥

[१३१] काशृ(काश्) = दीप्तौ। अक०। सेट्। आत्म०। to

shine. गाधृ (१२८) धातुवत् ॥ काशते ॥ चकाशे ॥

[१३२] भाष = व्यक्तायां वाचि । सक० । सेट् । आत्म० । to speak; to say; to describe. गाधृ (१२८) धातुवत् ॥ भाषते ॥ बभाषे ॥

[१३३] श्लाघृ (श्लाघ्) = सामर्थ्ये । सक० । सेट् । आत्म० । to praise; to flatter; to boast. गाधृ (१२८) धातुवत् । लट् । श्लाघते ॥ 5. लिट् । शश्लाघे ॥

[१३४] तिपृ (तिप्) = क्षरणे । सक० । अनि० । आत्म० । to drop; to ooze. लट् । तेपते ॥ 5. लिट् । प्र० तितिपे । तितिपाते । तितिपिरे ॥ म० तितिपिषे । तितिपाथे । तितिपिध्वे ॥ उ० तितिपे । तितिपिवहे । तितिपिमहे ॥ 6. लुट् । तेप्ता ॥ 7. लृट् । तेप्स्यते ॥ 8. आशी० । प्र० तिप्सीष्ट । तिप्सीयास्ताम् । तिप्सीरन् ॥ म० । तिप्सीष्ठाः ॥ उ० तिप्सीय ॥ 9. लुङ् । X. प्र० अतिप्त । अतिप्साताम् । अतिप्सत ॥ म० अतिप्थाः । अतिप्साथाम् । अतिब्ध्वम् ॥ उ० अतिप्सि । अतिप्स्वहि । अतिप्स्महि ॥ 10. लृङ् । अतेप्स्यत ॥

[१३५] त्रपूष् (त्रप्) = लज्जायाम् । अक० । वेट् । आत्म० । to be ashamed. 1. लट् । त्रपते ॥ 2. लोट् । त्रपताम् ॥ 3. लङ् । अत्रपत ॥ 4. विधि० । त्रपेत ॥

5. लिट् । प्र० त्रेपे । त्रेपाते । त्रेपिरे ॥ म० त्रेपिषे—त्रेप्से । त्रेपाथे । त्रेपिध्वे – त्रेब्ध्वे ॥ उ० त्रेपे । त्रेपिवहे – त्रेप्वहे । त्रेपिमहे -- त्रेप्महे ॥ 6. लुट् । त्रपिता-त्रप्ता ॥ 7. लृट् । त्रपिष्यते -- त्रप्स्यते ॥ 8. आशी० -- त्रपिषीष्ट – त्रप्सीष्ट । त्रपिषीयास्ताम् -- त्रप्सीयास्ताम् । त्रपिषीरन् – त्रप्सीरन् ॥ 9. लुङ् । XI. प्र० अत्रपिष्ट । अत्रपिषाताम् । अत्रपिषत ॥ म० अत्रपिष्ठाः । अत्रपिषाथाम् । अत्रपिध्वम्--ढ्वम् ॥ उ० अत्रपिषि । अत्रपिष्वहि । अत्रपिष्महि ॥ इडभावपक्षे । X. प्र० अत्रप्त । अत्रप्साताम् । अत्रप्सत ॥ म० अत्रब्धाः । अत्रप्साथाम् । अत्रब्ध्वम् ॥ उ० अत्रप्सि । अत्रप्स्वहि । अत्रप्स्महि ॥ 10. लृङ् । अत्रपिष्यत -- अत्रप्स्यत ॥

[१३६] कृपू (कल्प्)= सामर्थ्ये । अक० । वेट् । आत्म० । to be fit for; to be able. 1. लट् । कल्पते ॥ 2. लोट् । कल्पताम् ॥ 3. लङ् । अकल्पत ॥ 4 विधि० । कल्पेत ॥ 5. लिट् । प्र० चक्लृपे । चक्लृपाते । चक्लृपिरे ॥ म० चक्लृपिषे – चक्लृप्से । चक्लृपाथे । चक्लृपिध्वे ॥ उ० चक्लृपे । चक्लृपिवहे -- चक्लृप्वहे । चक्लृपिमहे -- चक्लृप्महे ॥ 6. लुट् । प्र० कल्पिता -- कल्प्ता ॥ म० कल्पितासे -- कल्प्तासे । उ० कल्पिताहे – कल्प्ताहे ॥ परस्मैपदपक्षे -- प्र० कल्प्ता ॥ म० कल्प्तासि ॥ उ० कल्प्तास्मि ॥ 7. लृट् । कल्पिष्यते -- कल्प्स्यते-कल्प्स्यति ।

इत्यादि परस्मैपदरूपाणि च ॥ 8. आशी० । कल्पिषीष्ट -- क्लृप्सीष्ट ॥ 9. लुङ् । XI. अकल्पिष्ट । अकल्पिषाताम् । अकल्पिषत । अनिट्पक्षे -- X. -- अक्लृप्त । अक्लृप्साताम् । अक्लृप्सत ॥ परस्मैपदपक्षे II. अक्लृपत् । अक्लृपताम् । अक्लृपन् ॥ 10. लृङ् । अकल्पिष्यत -- अक्लृप्स्यत ॥ परस्मैपदपक्षे -- अकल्प्स्यत् ॥

[१३७] क्षमूष् (क्षम) = सहने। सक०। वेट्। आत्म०। to endure. 1. लट्। क्षमते ॥ 2. लोट्। क्षमताम् ॥ 3. लङ्। अक्षमत ॥ 4. विधि०। क्षमेत ॥ 5. लिट्। प्र० चक्षमे। चक्षमाते। चक्षमिरे॥ म० चक्षमिषे--चक्षंसे। चक्षमाथे। चक्षमिध्वे--चक्षन्ध्वे ॥ उ० चक्षमे। चक्षमिवहे--चक्षण्वहे। चक्षमिमहे--चक्षण्महे ॥ 6. लुट्। प्र० क्षमिता--क्षन्ता ॥ म० क्षमितासे--क्षन्तासे ॥ उ० क्षमिताहे--क्षन्ताहे ॥ 7. लृट्। क्षमिष्यते--क्षंस्यते ॥ 8. आशी०। क्षमिषीष्ट--क्षंसीष्ट ॥ 9. लुङ्। XI. अक्षमिष्ट। अक्षमिषाताम्। अक्षमिषत ॥ अनिट्पक्षे--X. अक्षंस्त। अक्षंसाताम्। अक्षंसत ॥ 10. लृङ्। अक्षमिष्यत--अक्षंस्यत ॥

[१३८] गाहू (गाह्) = विलोडने। सक०। वेट्। आत्म०। to dive; to bathe. 1. लट्। गाहते ॥ 2. लोट्। गाहताम् ॥ 3. लङ्। अगाहत ॥ 4. विधि०। गाहेत ॥

5. लिट् । प्र० जगाहे । जगाहाते । जगाहिरे ॥ म० जगाहिषे--जघाक्षे । जगाहाथे । जगाहिध्वे–ढ्वे जघाड्ढ्वे ॥ उ० जगाहे । जगाहिवहे– जगाह्वहे । जगाहिमहे–जगाह्महे ॥ 6. लुट् । गाहिता -- गाढा ॥ 7. लृट् । गाहिष्यते–घाक्ष्यते ॥ 8. आशी० । प्र० गाहिषीष्ट–घाक्षीष्ट ॥ म० गाहिषीध्वम् -- ढ्वम् घाक्षीध्वम् ॥ 9. लुङ् । XI ; X. प्र० अगाहिष्ट--अगाढ । अगाहिषाताम्-अघाक्षाताम् । म० अगाहिध्वम्–ढ्वम्--अघाड्ढ्वम् ॥ 10. लृङ् । अगाहिष्यत-अघाक्ष्यत ॥

[१३९] शिक्ष = विद्योपादाने । सक० । सेट् । आत्म० । to learn ; to practice. 1. लट् शिक्षते ॥ 2. लोट् । शिक्षताम् ॥ 3. लङ् । अशिक्षत ॥ 4. विधि० । शिक्षेत ॥ 5. लिट् । प्र० शिशिक्षे । शिशिक्षाते । शिशिक्षिरे ॥ म० शिशिक्षिषे । शिशिक्षाथे । शिशिक्षिध्वे ॥ उ० शिशिक्षे । शिशिक्षिवहे । शिशिक्षिमहे ॥ 6. लुट् । प्र० शिक्षिता । म० शिक्षितासे ॥ उ० शिक्षिताहे ॥ 7. लृट् शिक्षिष्यते ॥ 8. आशी० । प्र० शिक्षिषीष्ट । शिक्षिषीयास्ताम् । शिक्षिषीरन् ॥ म० शिक्षिषीष्ठाः ॥ उ० शिक्षिषीय । 9. लुङ् । XI. अशिक्षिष्ट । अशिक्षिषाताम् । अशिक्षिषत ॥ 10. लृङ् । अशिक्षिष्यत ॥

[१४०] भिक्ष = याच्ञायाम् । सक० । सेट् । आत्म० । to ask

for ; to beg. शिक्ष (१३९) धातुवत्॥ भिक्षते॥ बिभिक्षे॥

[१४१] दीक्ष = मौण्ड्येज्योपनयननियमव्रतादेशेषु । अक० सक० । सेट् । आत्म० । to be shaved ; to perform a sacrifice, &c. शिक्ष (१३९) धातुवत्॥ 1. लट् । दीक्षते॥ 5. लिट् । प्र० दिदीक्षे । दिदीक्षाते । दिदीक्षिरे ॥ म० दिदीक्षिषे । दिदीक्षाथे । दिदीक्षिध्वे॥ उ० दिदीक्षे । दिदीक्षिवहे । दिदीक्षिमहे॥ 9. लुङ् । XI. अदीक्षिष्ट॥

[१४२] ईक्ष = दर्शने । सक० । सेट् । आत्म० । to see. 1. लट् । ईक्षते । 2. लोट् । ईक्षताम्॥ 3. लङ् । ऐक्षत॥ 4. विधि० । ईक्षेत॥ 5. लिट् । ईक्षांचक्रे । ईक्षांबभूव । ईक्षामास॥ 9. लुङ् । XI. ऐक्षिष्ट । ऐक्षिषाताम् । ऐक्षिषत॥

[१४३] टु भ्राशृ (भ्राश्) = दीप्तौ । अक० । सेट् । आत्म० । to shine. 1. लट् । भ्राशते-भ्राश्यते॥ 2. लोट् । भ्राशताम्--भ्राश्यताम्॥ 3. लङ् । अभ्राशत--अभ्राश्यत॥ 4. विधि० । भ्राशेत--भ्राश्येत॥ 5. लिट् । प्र० बभ्राशे । बभ्राशाते । बभ्राशिरे॥ म० बभ्राशिषे । बभ्राशाथे । बभ्राशिध्वे॥ उ० बभ्राशे । बभ्राशिवहे । बभ्राशिमहे॥ पक्षे-- प्र० भ्रेशे । भ्रेशाते। भ्रेशिरे॥ म० भ्रेशिषे । भ्रेशाथे । भ्रेशिध्वे॥

उ० अशे। अशिवहे। अशिमहे॥ 6. लुट्। आशिता॥ 7. लृट्। आशिष्यते॥ 8. आशी० आशिषीष्ट। आशिषीयास्ताम्॥ 9. लुङ्। XI. अआशिष्ट॥

[१४४] डीङ् (डी) = विहायसा गतौ। अक०। सेट्। आत्म०। to fly; to pass through air. 1. लट्। डयते॥ 2. लोट्। डयताम्॥ 3. लङ्। अडयत॥ 4. विधि०। डयेत॥ 5. लिट्। प्र० डिड्ये। डिड्याते। डिड्यिरे॥ म०। डिड्यिषे। डिड्याथे। डिड्यिध्वे॥ उ० डिड्ये। डिड्यिवहे। डिड्यिमहे॥ 9. लुङ्। XI. अडयिष्ट। अडयिषाताम्। अडयिषत॥ म० अडयिध्वम्–ढ्वम्॥

[१४५] ष्मिङ् (स्मि) = ईषद्धसने। अक०। अनि०। आत्म०। 1. लट्। स्मयते॥ 2. लोट्। स्मयताम्॥ 3. लङ्। अस्मयत॥ 4. विधि०। स्मयेत॥ 5. लिट्॥ प्र० सिष्मिये। सिष्मियाते। सिष्मियिरे॥ म० सिष्मियिषे। सिष्मियाथे। सिष्मियिध्वे-ढ्वे॥ उ० सिष्मिये। सिष्मियिवहे। सिष्मियिमहे॥ 6. लुट्। स्मेता॥ 7. लृट्। स्मेष्यते॥ 8. आशी०। स्मेषीष्ट॥ 9. लुङ्। XI. अस्मेष्ट। अस्मेषाताम्। अस्मेषत॥

[१४६] रभ=रामस्ये। सक०। अनि०। आत्म०। to begin; to desire; to act rashly. 1. लट्। रभते॥ 2.

लोट् । रभताम् ॥ 3. लङ् । अरभत ॥ 4. विधि० । रभेत ॥ 5. लिट् । प्र० रेभे । रेभाते । रेभिरे ॥ म० रेभिषे । रेभाथे । रेभिध्वे ॥ उ० रेभे । रेभिवहे । रेभिमहे ॥ 6. लुट् । रब्धा ॥ 7. लृट् । रप्स्यते ॥ 8. आशी० । रप्सीष्ट ॥ 9. लुङ् । X. अरब्ध । अरप्साताम् । अरप्सत ॥ 10. लृङ् अरप्स्यत ॥

[१४७] डु लभष् (लभ्) = प्राप्तौ । सक० । अनि० । आत्म० । to get; to obtain. रभ (१४६) धातुवत् । 1. लट् । लभते ॥ 2. लोट् । लभताम् । ॥ 3. लङ् । अलभत ॥ 4. विधि० । लभेत ॥ 5. लिट् । लेभे । लेभाते । लेभिरे ॥ 6. लुट् । लब्धा ॥ 7. लृट् । लप्स्यते ॥ 8. आशी० । लप्सीष्ट ॥ 9. लुङ् । X. अलब्ध । अलप्साताम् ॥

[१४८] षह (सह्) = मर्षणे । सक० । सेट् । आत्म० । to endúre; to suffer; to forbear. दध (१२१) धातुवत् । 5. लिट् । प्र० सेहे । सेहाते । सेहिरे ॥ म० सेहिषे । सेहाथे । सेहिध्वे – ढ्वे ॥ उ० सेहे । सेहिवहे । सेहिमहे ॥ 6. लुट् । सहिता – सोढा ॥ 7. लृट् । सहिष्यते ॥ 9. XI. लुङ् । असहिष्ट ॥ म० असहिध्वम्–ढ्वम् ॥

[१४९] स्रंसु (स्रंस्) = अवस्रंसने । अक० । सेट् । आत्म० ।

to drop to down. 1. लट् । स्रंसते ॥ 2. लोट् । स्रंसताम् ॥ 3. लङ् । अस्रंसत ॥ 4. विधि० । स्रंसेत ॥ 5. लिट् । प्र० सस्रंसे । सस्रंसाते । सस्रंसिरे ॥ म० सस्रंसिषे । सस्रंसाथे । सस्रंसिध्वे ॥ उ० सस्रंसे । सस्रंसिवहे । सस्रंसिमहे ॥ 6. लुट् । स्रंसिता ॥ 7. लृट् । स्रंसिष्यते ॥ 8. आशी० । स्रंसिषीष्ट ॥ 9. लुङ् । XI. अस्रंसिष्ट । अस्रंसिषाताम् । अस्रंसिषत ॥ पक्षे । II. अस्रसत् । अस्रसताम् । अस्रसन् ॥

[१५०] ध्वंसु (ध्वंस्) = अवस्रंसने । स्रंसु (१४९) धातुवत् ॥

[१५१] ष्टंभि (स्तंभ्) = प्रतिबन्धे । अक० । सेट् । आत्म० । to stop; to hinder. स्तंभने ॥ 5. लिट् । तस्तंभे ॥ तस्तंभाते ॥ 9. लुङ् । XI. अस्तंभिष्ट । अस्तंभिषाताम् ॥

[१५२] लघि (लङ्घ्) = गतौ भोजननिवृत्तौ च । सक० । सेट् । आत्म० । to go; to transgress; to fast. त्रदि (११५) धातुवत् ॥

[१५३] टु वेपृ (वेप्) = कंपने । अक० । सेट् । आत्म० । to tremble. 1. लट् । वेपते ॥ 2. लोट् । वेपताम् ॥ 3. लङ् । अवेपत ॥ 4. विधि० वेपेत ॥ 5. लिट् । प्र० विवेपे । विवेपाते । विवेपिरे ॥ म० विवेपिषे । विवेपाथे । विवेपिध्वे ॥ उ० विवेपे । विवेपिवहे । विवेपिमहे ॥

6. लुट् । वेपिता ॥ 7. लृट् । वेपिष्यते ॥ 8. आशी०
• वेपिषीष्ट ॥ 9. लुङ् । XI. अवेपिष्ट ॥

[१५४] षेवृ (सेव्) = सेवने । सक० । सेट् । आत्म० । to serve; to enjoy. 1. सेवते इत्यादि । वेपृ (१५३) धातुवत् ॥ 5. लिट् । सिषेवे ॥ म० सिषेविध्वे–ढ्वे ॥
9. लुङ् । XI. असेविष्ट ॥ म० असेविध्वम्--ढ्वम् ॥

[१५५] देवृ (देव्) = देवने । अक० । सेट् । आत्म० । to sport; to lament. षेवृ (१५४) धातुवत् ॥

[१५६] वेष्टृ = वेष्टने । सक० । सेट् । आत्म० । to surround. वेपृ (१५३) धातुवत् ॥

[१५७] चेष्टृ = चेष्टायाम् । अक० । सेट् । आत्म० । to stir; to make efforts. वेपृ (१५३) धातुवत् ॥

[१५८] वृतु (वृत्) = वर्तने । अक० । सेट् । आत्म० । to exist; to happen; to live on. 1. लट् । वर्तते ॥ 2. लोट् । वर्तताम् ॥ 3. लङ् । अवर्तत ॥ 4. विधि० । वर्तेत ॥ 5. लिट् । ववृते । ववृताते । ववृतिरे ॥ 6. लुट् । प्र० वर्तिता ॥ म० वर्तितासे ॥ उ० वर्तिताहे ॥ 7. लृट् । वर्तिष्यते वर्तिष्येते । वर्तिष्यन्ते ॥ परस्मैपदपक्षे--वर्त्स्यति । वर्त्स्यतः । वर्त्स्यन्ति ॥ 9. लुङ् । XI. अवर्तिष्ट । अवर्तिषाताम् ।

अवर्तिषत ॥ परस्मैपदपक्षे—II. अवृतत् । अवृतताम् । अवृतन् ॥ 10. लृङ् । अवर्तिष्यत-अवर्त्स्यत् ॥

[१५९] **वृधु** (वृध्) = वृद्धौ । अक० । सेट् । आत्म० । to grow. **वृतु** (१५८) धातुवत् ॥

[१६०] **शसि** (शंस्) आङ्पूर्वः । इच्छायाम् । सक० । सेट् । आत्म० । to hope; to bless. आशंसते इत्यादि **वदि** (११५) धातुवत् ॥

[१६१] **ऋज** = गतिस्थानार्जनोपार्जनेषु । सक० । सेट् । आत्म० । to go; to acquire. 1. **लट्** । अर्जते ॥ 2. **लोट्** । अर्जताम् ॥ 3. **लङ्** । आर्जत ॥ 4. **विधि०** । अर्जेत ॥ 5. **लिट्** । **प्र०** आनृजे । आनृजाते । आनृजिरे ॥ **म०** आनृजिषे । आनृजाथे । आनृजिध्वे ॥ **उ०** आनृजे । आनृजिवहे । आनृजिमहे ॥ 6. **लुट्** । अर्जिता ॥ 7. **लृट्** । अर्जिष्यते ॥ 8. **आशी०** अर्जिषीष्ट ॥ **म०** अर्जिषीध्वम् ॥ 9. **लुङ्** । XI. आर्जिष्ट । आर्जिषाताम् । आर्जिषत ॥ आर्जिध्वम्—ढ्वम् ॥

[१६२] **जृभि** (जृंभ्) = गात्रविनामे । अक० । सेट् । आत्म० । to yawn. 1. **लट्** । जृंभते ॥ 5. **लिट्** । जजृंभे । जजृंभाते ॥ 8. **आशी०** । जृंभिषीष्ट ॥ 9. **लुङ्** । XI. अजृंभिष्ट ॥

इति भ्वादावात्मनेपदिनः ।

# अथ भ्वादावुभयपदिनः ।

[१६३] राजृ (राज्) दीप्तौ । अक० । सेट् । उभ० । to shine. **परस्मैपदे**–1. लट् । राजति ॥ 2. लोट् । राजतु ॥ 3. लङ् । अराजत् ॥ 4. विधि० । राजेत् ॥ 5. लिट् । प्र० रराज । रराजतुः–रेजतुः । रराजुः–रेजुः ॥ म० रराजिथ–रेजिथ । रराजथुः–रेजथुः । रराज- रेज ॥ उ० रराज । रराजिव–रेजिव । रराजिम–रेजिम ॥ 6. लुट् । प्र० राजिता ॥ म० राजितासि ॥ 7. लृट् । राजिष्यति ॥ 8. आशी० । राज्यात् । राज्यास्ताम् ॥ 9. लुङ् । VII. अराजीत् । अराजिष्टाम् । अराजिषुः । 10. लृङ् । अराजिष्यत् ॥ **आत्मनेपदे**—1. लट् । राजते ॥ 2. लोट् । राजताम् । 3. लङ् । अराजत ॥ 4. विधि० । राजेत ॥ 5. लिट् । प्र० रेजे । रेजाते । रेजिरे ॥ म० रेजिषे । रेजाथे । रेजिध्वे ॥ उ० रेजे । रेजिवहे । रेजिमहे ॥ पक्षे–रराजे । रराजाते । रराजिरे । इत्यादि ॥ 6. लुट् । राजिता । म० राजितासे ॥ 7. लृट् । राजिष्यते ॥ 8. आशी० । राजिषीष्ट ॥ 9. लुङ् । XI. अराजिष्ट । अराजिषाताम् ॥ 10. लृङ् । अराजिष्यत ॥

[१६४] टु याचृ (याच्) = याच्ञायाम् । सक० । सेट् । उभ० । to beg. 1. लट् । याचति–याचते इत्यादि राजृ (१६३) वत् ॥ किं तु लिटि एत्वाभ्यासलोपौ न स्तः । ययाचे । ययाचाते । ययाचिरे ॥ इत्यादि ॥

[१६५] श्रिञ् (श्रि) = सेवायाम् । सक० । सेट् । उभ० । to depend upon; to cling. **परस्मैपदे**—1. लट् । श्रयति ॥ 2. लोट् । श्रयतु ॥ 3. लङ् । अश्रयत् ॥ 4. **विधि०** । श्रयेत् ॥ 5. **लिट्** । **प्र०** शिश्राय । शिश्रियतुः । शिश्रियुः ॥ **म०** शिश्रयिथ । शिश्रियथुः । शिश्रिय ॥ **उ०** शिश्राय–शिश्रय । शिश्रियिव । शिश्रियिम ॥ 6. लुट् । **प्र०** श्रयिता ॥ **म०** श्रयितासि ॥ 7. लृट् । श्रयिष्यति ॥ 8. **आशी०** । श्रीयात् । श्रीयास्ताम् ॥ 9. लुङ् । III. **प्र०** अशिश्रियत् ॥ 10. लृङ् । अश्रयिष्यत् ॥ **आत्मनेपदे**--1. लट् । श्रयते ॥ 2. लोट् । श्रयताम् ॥ 3. लङ् । अश्रयत ॥ 4. **विधि०** । श्रयेत ॥ 5. **लिट्** । **प्र०** शिश्रिये । शिश्रियाते । शिश्रियिरे ॥ **म०** शिश्रियिषे ॥ शिश्रियाथे । शिश्रियिध्वे--ढ्वे ॥ **उ०** शिश्रिये । शिश्रियिवहे । शिश्रियिमहे ॥ 6. लुट् । श्रयिता ॥ श्रयितासे ॥ 7. लृट् । श्रयिष्यते ॥ 8. **आशी०** । श्रयिषीष्ट ॥ 9. लुङ् । IX. अशिश्रियत । अशिश्रियेताम् । अशिश्रियन्त ॥ 10. लृङ् । अश्रयिष्यत ॥

१६६] धृञ् (धृ) = धारणे। सक०। अनि०। उभ०। to hold. 1. लट्। धरति॥ 2. लोट्। धरतु॥ 3. लङ्। अधरत्॥ 4. विधि०। धरेत्॥ 5. लिट्। प्र० दधार। दध्रतुः। दध्रुः॥ म० दधर्थ। दध्रथुः। दध्र॥ उ० दधार-दधर। दध्रिव। दध्रिम॥ 6. लुट्। धर्तासि॥ 7. लृट्। धरिष्यति॥ 8. आशी०। ध्रियात्। ध्रियास्ताम्॥ 9. लुङ्। VI. प्र० अधार्षीत्। अधार्ष्टाम्। अधार्षुः॥ म० अधार्षीः। अधार्ष्टम्। अधार्ष्ट॥ उ० अधार्षम्। अधार्ष्व। अधार्ष्म॥ 10. लृङ्। अधरिष्यत्॥

आत्मनेपदे—1. लट्। धरते॥ 2. लोट्। धरताम्॥ 3. लङ्। अधरत॥ 4. विधि०। धरेत॥ 5. लिट्। प्र० दध्रे। दध्राते। दध्रिरे॥ म० दध्रिषे। दध्राथे। दध्रिध्वे॥ उ० दध्रे। दध्रिवहे। दध्रिमहे॥ 6. लुट्। प्र० धर्ता॥ म० धर्तासे॥ 7. लृट्। धरिष्यते॥ 8. आशी०। प्र० धृषीष्ट। धृषीयास्ताम्॥ म० धृषीष्ठाः। धृषीयास्थाम्। धृषीढ्वम्। 9. लुङ्। X. प्र० अधृत। अधृषाताम्। अधृषत॥ म० अधृथाः। अधृषाथाम्। अधृढ्वम्॥ उ० अधृषि। अधृष्वहि। अधृष्महि 10. लृङ्। अधरिष्यत॥

१६७] हृञ् (हृ) = हरणे। सक०। अनि०। उभ०। to take; to lead; to draw to a distance; to deprive

of; to win; to obtain. धृ (१६६) धातुवत् । परस्मैपदे— 5. लिट् । प्र० जहार । जह्रतुः । जह्रुः ॥ म० जहर्थ । जह्रथुः । जह्र ॥ उ० जहार-जहर । जह्रिव । जह्रिम ॥ 9. लुङ् । VI. अहार्षीत् ॥ 10. लृङ् । अहरिष्यत् ॥

आत्मनेपदे–5. लिट् । प्र० जह्रे । जह्राते । जह्रिरे ॥ म० जह्रिषे । जह्राथे । जह्रिध्वे--ढ्वे ॥ उ० जह्रे । जह्रिवहे । जह्रिमहे ॥ 9. लुङ् । X. अहृत ॥ अहृढ्वम् ॥

[१६८] भृञ् (भृ) = भरणे । सक० । अनि० । उभ० । to fill; to nourish. धृ (१६६) धातुवत् । परस्मैपदे—5. लिट् । प्र० बभार । बभ्रतुः । बभ्रुः ॥ म० बभर्थ । बभ्रथुः । बभ्र ॥ उ० बभार—बभर । बभृव । बभृम ॥ 9. लुङ् । VI. अभार्षीत् । आत्मनेपदे—5. लिट् । बभ्रे । बभ्राते । बभ्रिरे ॥ म० बभ्रिध्वे–ढ्वे ॥ 9. लुङ् । X. अभृत । अभृषाताम् । अभृषत ॥ म० अभृढ्वम् ॥

[१६९] णीञ् (नी) = प्रापणे । द्विक० । अनि० । उभ० । to lead; to carry; to bring; to pass. परस्मैपदे—1. लट् । नयति ॥ 2. लोट् । नयतु--नयतात् । 3. लङ् । अनयत् ॥ 4. विधि० । नयेत् ॥ 5. लिट् । प्र० निनाय । निन्यतुः । निन्युः ॥ म० निनयिथ--निनेथ । निन्यथुः । निन्य ॥ उ० निनाय–निनय । निन्यिव ।

निन्यिम ॥ 6. लुट् । नेता ॥ 7. लृट् । नेष्यति ॥ 8. आशी० । नीयात् । नीयास्ताम् ॥ 9. लुङ् । VI. प्र० अनैषीत् । अनैष्टाम् ॥ 10. लृङ् । अनेष्यत् ॥

आत्मनेपदे—1. लट् । नयते ॥ 2. लोट् । नयताम् । नयेताम् ॥ 3. लङ् । अनयत । अनयेताम् ॥ 4. विधि० । नयेत । नयेयाताम् । नयेरन् ॥ 5. लिट् । प्र० निन्ये । निन्याते । निन्यिरे ॥ म० निन्यिषे । निन्याथे । निन्यिध्वे-ढ्वे ॥ उ० निन्ये । निन्यिवहे । निन्यिमहे ॥ 6. लुट् । नेता । नेतासे ॥ 7. लृट् । नेष्यते ॥ 8. आशी० । नेषीष्ट । नेषीयास्ताम् । नेषीरन् ॥ 9. लुङ् । X. प्र० अनेष्ट । अनेषाताम् । अनेषत ॥ म० अनेढ्वम् ॥ 10. लृङ् । अनेष्यत ॥

इति भ्वादावुभयपदिनः ।

---

भ्वादयश्च संपूर्णाः ॥ १ ॥

श्रीगणेशाय नमः ।

# मध्यमधातुरूपावल्याम् ।

## अदादयः ॥ २ ॥

### तत्र परस्मैपदिनः ।

[१७०] अद्=भक्षणे । सक० । अनि० । पर० । to eat. 1. लट् ।
प्र० अत्ति । अत्तः । अदन्ति ॥ म० अत्सि । अत्थः ।
अत्थ ॥ उ० अद्मि । अद्वः । अद्मः ॥ 2. लोट् ।
प्र० अत्तु-अत्तात् । अत्ताम् । अदन्तु ॥ म० अद्धि-
अत्तात् । अत्तम् । अत्त ॥ उ० अदानि । अदाव ।
अदाम ॥ 3. लङ् । प्र० आदत् । आत्ताम् । आदन् ॥
म० आदः । आत्तम् । आत्त ॥ उ० आदम् । आद्व ।
आद्म ॥ 4. विधि० । प्र० अद्यात् । अद्याताम् । अद्युः ॥
म० अद्याः । अद्यातम् । अद्यात ॥ उ० अद्याम् ।
अद्याव । अद्याम ॥

5. लिट् । प्र० जघास । जक्षतुः । जक्षुः ॥ म० जघसिथ । जक्षथुः । जक्ष ॥ उ० जघास–जघस । जक्षिव । जक्षिम ॥ पक्षे–प्र० आद । आदतुः । आदुः ॥ म० आदिथ । आदथुः । आद ॥ उ० आद । आदिव । आदिम ॥ 6. लुट् । प्र० अत्ता । अत्तारौ । अत्तारः ॥ म० अत्तासि । अत्तास्थः । अत्तास्थ ॥ उ० अत्तास्मि । अत्तास्वः । अत्तास्मः ॥ 7. लृट् । प्र० अत्स्यति । अत्स्यतः । अत्स्यन्ति ॥ म० अत्स्यसि । अत्स्यथः । अत्स्यथ ॥ उ० अत्स्यामि । अत्स्यावः । अत्स्यामः ॥ 8. आशी० । प्र० अद्यात् । अद्यास्ताम् । अद्यासुः ॥ म० अद्याः । अद्यास्तम् । अद्यास्त ॥ उ० अद्यासम् । अद्यास्व । अद्यास्म ॥ 9. लुङ् । II. प्र० अघसत् । अघसताम् । अघसन् ॥ म० अघसः । अघसतम् । अघसत ॥ उ० अघसम् । अघसाव । अघसाम ॥ 10. लृङ् । प्र० आत्स्यत् । आत्स्यताम् । आत्स्यन् ॥ म० आत्स्यः । आत्स्यतम् । आत्स्यत ॥ उ० आत्स्यम् । आत्स्याव । आत्स्याम ॥

[१७१] हन = हिंसागत्योः । सक० । अनि० । वधादेशस्तु सेट् । पर० । to kill. 1. लट् । प्र० हन्ति । हतः । घ्नन्ति । म० हंसि । हथः । हथ ॥ उ० हन्मि । हन्वः । हन्मः ॥ 2. लोट् । प्र० हन्तु–हतात् । हताम् । घ्नन्तु ॥ म० जहि–हतात् ।

हतम् । हत ॥ उ० हनानि । हनाव । हनाम ॥ 3. लङ् । प्र० अहन् । अहताम् । अघ्नन् ॥ म० अहन् । अहतम् । अहत ॥ उ० अहनम् । अहन्व । अहन्म ॥ 4. विधि० । प्र० हन्यात् । हन्याताम् । हन्युः । म० हन्याः । हन्यातम् । हन्यात ॥ उ० हन्याम् । हन्याव । हन्याम ॥

5. लिट् । प्र० जघान । जघ्नतुः । जघ्नुः ॥ म० जघनिथ--जघन्थ । जघ्नथुः । जघ्न । उ० जघान--जघन । जघ्निव । जघ्निम ॥ 6. लुट् । प्र० हन्ता ॥ म० हन्तासि ॥ उ० हन्तास्मि ॥ 7. लृट् । प्र० हनिष्यति ॥ म० हनिष्यसि ॥ उ० हनिष्यामि ॥ 8. आशी० । प्र० वध्यात् । वध्यास्ताम् । वध्यासुः ॥ म० वध्याः । वध्यास्तम् । वध्यास्त ॥ उ० वध्यासम् ॥ 9. लुङ् । VII. प्र० अवधीत् । अवधिष्टाम् । अवधिषुः ॥ म० अवधीः । अवधिष्टम् । अवधिष्ट ॥ उ० अवधिषम् ॥ 10. लृङ् । अहनिष्यत् ॥

[१७२] वच = परिभाषणे । द्विक० । अनि० । पर० । to speak. 1. लट् । प्र० वक्ति । वक्तः । ० ॥ म० वक्षि । वक्थः । वक्थ ॥ उ० वच्मि । वच्वः । वच्मः ॥ 2. लोट् । प्र० वक्तु-वक्तात् । वक्ताम् । वचन्तु ॥ म० वग्धि--वक्तात् । वक्तम् । वक्त ॥ उ० वचानि । वचाव । वचाम ॥ 3. लङ् । प्र० अवक्--ग् । अवक्ताम् । अवचन् ॥ म० अवक्--ग् । अवक्तम् ।

अवक्त ॥ उ० अवचम् । अवच्व । अवच्म ॥ 4. विधि० । वच्यात् । वच्याताम् । वच्युः ॥ 5. लिट् । प्र० उवाच । ऊचतुः । ऊचुः ॥ म० उवचिथ--उवक्थ । ऊचथुः । ऊच ॥ उ० उवाच--उवच । ऊचिव । ऊचिम ॥ 6. लुट् । वक्ता ॥ 7. लृट् । वक्ष्यति ॥ 8. आशी० । उच्यात् । उच्यास्ताम् ॥ 9. लुङ् । II. प्र० अवोचत् । अवोचताम् । अवोचन् ॥ म० अवोचः । अवोचतम् । अवोचत ॥ उ० अवोचम् । अवोचाव । अवोचाम ॥ 10. लृङ् । अवक्ष्यत् ॥

१७३] विद = ज्ञाने । सक० । सेट् । पर० । to know; to regard. 1. लट् । प्र० वेत्ति । वित्तः । विदन्ति ॥ म० वेत्सि । वित्थः । वित्थ ॥ उ० वेद्मि । विद्वः । विद्मः ॥ पक्षे–प्र० वेद । विदतुः । विदुः ॥ म० वेत्थ । विदथुः । विद ॥ उ० वेद । विद्व । विद्म ॥ 2. लोट् । प्र० वेत्तु–वित्तात् । वित्ताम् । विदन्तु ॥ म० विद्धि–वित्तात् । वित्तम् । वित्त ॥ उ० वेदानि । वेदाव । वेदाम ॥ पक्षे–प्र० विदांकरोतु–विदांकुरुतात् । विदांकुरुताम् । विदांकुर्वन्तु ॥ म० विदांकुरु–तात् । विदांकुरुतम् । विदांकुरुत ॥ उ० विदांकरवाणि । विदांकरवाव । विदांकरवाम ॥ 3. लङ् । प्र० अवेत्-द् । अवित्ताम् । अविदुः । म० अवेः–अवेत्--द् । अवित्तम् । अवित्त ॥ उ० अवेदम् । अविद्व । अविद्म ॥ 4. विधि० । विद्यात् । विद्याताम् । विद्युः ॥

5. लिट्। प्र० विवेद। विविदतुः। विविदुः॥ म० विवेदिथ। विविदथुः। विविद॥ उ० विवेद। विविदिव। विविदिम॥ पक्षे—विदांचकार—विदांबभूव--विदामास इत्यादि॥ 6. लुट्। वेदिता॥ 7. लृट्। वेदिष्यति॥ 8. आशी०। विद्यात्। विद्यास्ताम्॥ 9. लुङ्। VII. अवेदीत्। अवेदिष्टाम्। अवेदिषुः॥ 10. लृङ्। अवेदिष्यत्॥

[१७४] अस = भुवि। अक०। सेट्। पर०। to be. 1. लट्। प्र० अस्ति। स्तः। सन्ति॥ म० असि। स्थः। स्थ॥ उ० अस्मि। स्वः। स्मः॥ 2. लोट् प्र० अस्तु—स्तात्। स्ताम्। सन्तु॥ म० एधि--स्तात्। स्तम्। स्त॥ उ० असानि। असाव। असाम॥ 3. लङ्। प्र० आसीत्। आस्ताम्। आसन्॥ म० आसीः। आस्तम्। आस्त॥ उ० आसम्। आस्व। आस्म॥ 4. विधि०। प्र० स्यात्। स्याताम्। स्युः॥ म० स्याः। स्यातम्। स्यात॥ उ० स्याम्। स्याव। स्याम॥ 5. लिट्। (आर्धधातुके) बभूव। बभूवतुरित्यादीनि भूधातो रूपाणि। 6. लुट्। भविता॥ 7. लृट्। भविष्यति॥ 8. आशी०। भूयात्। भूयास्ताम्॥ 9. लुङ् I.। अभूत्॥ 10. लृङ्। अभविष्यत्॥

[१७५] ञि ष्वप् (स्वप्) = शयने। अक०। अनि०। पर०। to sleep; to repose. 1. लट्। प्र० स्वपिति।

स्वपितः । स्वपन्ति ॥ म० स्वपिषि । स्वपिथः । स्वपिथ ॥ उ० स्वपिमि । स्वपिवः । स्वपिमः ॥ 2. लोट् । प्र० स्वपितु–स्वपितात् । स्वपिताम् । स्वपन्तु ॥ म० स्वपिहि–स्वपितात् । स्वपितम् । स्वपित । उ० स्वपानि । स्वपाव । स्वपाम ॥ 3. लङ् । प्र० अस्वपीत्–अस्वपत् । अस्वपिताम् । अस्वपन् ॥ म० अस्वपीः–अस्वपः । अस्वपितम् । अस्वपित ॥ उ० अस्वपम् । अस्वपिव । अस्वपिम ॥ 4. विधि० । स्वप्यात् । स्वप्याताम् ॥ 5. लिट् । प्र० सुष्वाप । सुषुपतुः । सुषुपुः ॥ म० सुष्वपिथ–सुष्वप्थ । सुषुपथुः । सुषुप ॥ उ० सुष्वाप–सुष्वप । सुषुपिव । सुषुपिम ॥ 6. लुट् । स्वप्ता ॥ 7. लृट् । स्वप्स्यति ॥ 8. आशी० । सुप्यात् । सुप्यास्ताम् । सुप्यासुः ॥ 9. लुङ् । VI. प्र० अस्वाप्सीत् । अस्वाप्ताम् । अस्वाप्सुः ॥ म० अस्वाप्सीः । अस्वाप्तम् । अस्वाप्त ॥ उ० अस्वाप्सम् । अस्वाप्स्व । अस्वाप्स्म ॥ 10. लृङ् । अस्वप्स्यत् ॥

[१७६] रुदिर् (रुद्) = अश्रुविमोचने । अक० । सेट् । पर० । to cry; to weep. 1. लट् । प्र० रोदिति । रुदितः । रुदन्ति ॥ म० रोदिषि । रुदिथः । रुदिथ ॥ उ० रोदिमि । रुदिवः । रुदिमः ॥ 2. लोट् । प्र० रोदितु–रुदितात् । रुदिताम् । रुदन्तु ॥ म० रुदिहि–रुदितात् । रुदितम् । रुदित ॥ उ० रोदानि । रोदाव । रोदाम ॥ 3. लङ् । प्र०

अरोदीत्–अरोदत् । अरुदिताम् । अरुदन् ॥ म० अरोदीः-अरोदः । अरुदितम् । अरुदित ॥ उ० अरोदम् । अरुदिव । अरुदिम ॥ 4. विधि० रुद्यात् । रुद्याताम् ॥ 5. लिट् । प्र० रुरोद । रुरुदतुः । रुरुदुः ॥ म० रुरोदिथ । रुरुदथुः । रुरुद ॥ उ० रुरोद । रुरुदिव । रुरुदिम ॥ 6. लुट् । रोदिता ॥ 7. लृट् । रोदिष्यति ॥ 8. आशी० । रुद्यात् । रुद्यास्ताम् ॥ 9. लुङ् । VII. अरोदीत् । अरोदिष्टाम् । अरोदिषुः ॥ पक्षे–II. अरुदत् । अरुदताम् । अरुदन् ॥ 10. लृङ् । अरोदिष्यत् ।

[१७७] **श्वस** = प्राणने । अक० । सेट् । पर० । to breathe; to sigh; to hiss. 1. लट् । प्र० श्वसिति । श्वसितः । श्वसन्ति ॥ म० श्वसिषि । श्वसिथः । श्वसिथ ॥ उ० श्वसिमि । श्वसिवः । श्वसिमः ॥ 2. लोट् । प्र० श्वसितु--श्वसितात् । श्वसिताम् । श्वसन्तु ॥ म० श्वसिहि--श्वसितात् । श्वसितम् । श्वसित ॥ उ० श्वसानि ॥ 3. लङ् । प्र० अश्वसीत्--अश्वसत् । अश्वसिताम् । अश्वसन् ॥ म० अश्वसीः--अश्वसः । अश्वसितम् । अश्वसित ॥ उ० अश्वसम् । अश्वसिव । अश्वसिम ॥ 4. विधि० । श्वस्यात् । श्वस्याताम् ॥

5. लिट् । प्र० शश्वास । शश्वसतुः । शश्वसुः ॥ म० शश्वसिथ । शश्वसथुः । शश्वस ॥ उ० शश्वास--शश्वस । शश्व-

सिव ॥ 6. लुट् । श्वसिता ॥ 7. लृट् । श्वसिष्यति ॥ 8. आशी० । श्वस्यात् । श्वस्यास्ताम् ॥ श्वस्यासुः 9. लुङ् । VII. अश्वसीत् । अश्वसिष्टाम् । अश्वसिषुः ॥ 10. लृङ् । अश्वसिष्यत् ॥

[१७८] अन = प्राणने । अक० । सेट् । पर० । to live.
1. लट् । प्र० अनिति ॥ म० अनिषि ॥ उ० अनिमि ॥
2. लोट् । प्र० अनितु ॥ म० अनिहि ॥ उ० अनानि ॥
3. लङ् । प्र० आनीत्--आनत् । आनिताम् । आनन् ॥ म० आनीः--आनः । आनितम् । आनित ॥ उ० आनम् । आनिव । आनिम ॥ 4. विधि० । अन्यात् । अन्याताम् ॥
5. लिट् । प्र० आन । आनतुः । आनुः ॥ म० आनिथ । आनथुः । आन ॥ उ० आन । आनिव । आनिम ॥
6. लुट् । अनिता ॥ 7. लृट् । अनिष्यति ॥ 8. आशी० । अन्यात् । अन्यास्ताम् ॥ 9. लुङ् । VII. आनीत् । आनिष्टाम् ॥ 10. लृङ् । आनिष्यत् ॥

[१७९] जक्ष = भक्षणहसनयोः । भक्षणे सक० । सेट् । पर० । to eat; to laugh. 1. लट् । प्र० जक्षिति । जक्षितः । जक्षति ॥ म० जक्षिषि । जक्षिथः । जक्षिथ ॥ उ० जक्षिमि । जक्षिवः । जक्षिमः ॥ 2. लोट् । प्र० जक्षितु--तात् । जक्षिताम् । जक्षतु ॥ म० जक्षिहि--तात् । जक्षितम् ।

जक्षित ॥ उ० जक्षाणि । जक्षाव । जक्षाम ॥ 3. लङ् । प्र० अजक्षीत्—अजक्षत् । अजक्षिताम् । अजक्षुः ॥ म० अजक्षीः-अजक्षः । अजक्षितम् । अजक्षित ॥ उ० अजक्षम् । अजक्षिव । अजक्षिम ॥ 4. विधि० । जक्ष्यात् । जक्ष्याताम् ॥ 5. लिट् । प्र० जजक्ष । जजक्षतुः । जजक्षुः ॥ म० जजक्षिथ । जजक्षथुः । जजक्ष ॥ उ० जजक्ष । जजक्षिव । जजक्षिम ॥ 6. लुट् । जक्षिता ॥ 7. लृट् । जक्षिष्यति ॥ 8. आशी० । जक्ष्यात् । जक्ष्यास्ताम् ॥ 9. लुङ् । VII. अजक्षीत् । अजक्षिष्टाम् ॥ 10. लृङ् । अजक्षिष्यत् ॥

[१८०] **मृजू (मृज्)** = शुद्धौ । सक० । वेट् । पर० । to wipe off; to clear. 1. लट् । प्र० मार्ष्टि । मृष्टः । मृजन्ति—मार्जन्ति ॥ म० मार्क्षि । मृष्ठः । मृष्ठ ॥ उ० मार्ज्मि । मृज्वः । मृज्मः ॥ 2. लोट् । प्र० मार्ष्टु--मृष्टात् । मृष्टाम् । मृजन्तु--मार्जन्तु ॥ म० मृड्ढि--मृष्टात् । मृष्टम् । मृष्ट ॥ उ० मार्जानि ॥ 3. लङ् । प्र० अमार्ट्-ड् । अमृष्टाम् । अमृजन्--अमार्जन् ॥ म० अमार्ट्-ड् । अमृष्टम् । अमृष्ट ॥ उ० अमार्जम् । अमृज्व । अमृज्म ॥ 4. विधि० । प्र० मृज्यात् । मृज्याताम् । मृज्युः ॥

5. लिट् । प्र० ममार्ज । ममार्जतुः—ममृजतुः । ममार्जुः—

ममृजुः ॥ म० ममार्जिथ--ममार्ष्ठ । ममार्जथुः--ममृजथुः । ममार्ज--ममृज ॥ उ० ममार्ज । ममृजिव--ममार्जिव--ममृज्व । ममृजिम--ममार्जिम--ममृज्म ॥ 6. लुट् । मार्जिता--मार्ष्टा ॥ 7. लृट् । मार्जिष्यति--मार्क्ष्यति ॥ 8. आशी० । मृज्यात् । मृज्यास्ताम् ॥ 9. लुङ् । VII. प्र० अमार्जीत् ॥ पक्षे--VI. अमार्क्षीत् ॥ 10. लृङ् । अमार्जिष्यत्-अमार्क्ष्यत् ॥

[१८१] **जागृ** = निद्राक्षये । अक० । सेट् । पर० । to awake.

1. लट् । प्र० जागर्ति । जागृतः । जाग्रति ॥ म० जागर्षि । जागृथः । जागृथ ॥ उ० जागर्मि । जागृवः । जागृमः ॥ 2. लोट् । प्र० जागर्तु--जागृतात् । जागृताम् । जाग्रतु ॥ म० जागृहि--जागृतात् । जागृतम् । जागृत ॥ उ० जागराणि ॥ 3. लङ् । प्र० अजागः । अजागृताम् । अजागरुः ॥ म० अजागः । अजागृतम् । अजागृत ॥ उ० अजागरम् । अजागृव । अजागृम ॥ 4. विधि० । जागृयात् । जागृयाताम् । जागृयुः ॥ 5. लिट् । प्र० जजागार । जजागरतुः । जजागरुः ॥ म० जजागरिथ । जजागरथुः । जजागर ॥ उ० जजागार--जजागर । जजागरिव । जजागरिम ॥ पक्षे--जागरांचकार--जागरांबभूव--जागरामास ॥ 6. लुट् । जागरिता ॥ 7. लृट् । जागरिष्यति ॥ 8. आशी० । जागर्यात् । जागर्यास्ताम् ॥ 9. लुङ् । VII. अजागरीत् । अजागरिष्टाम् । अजागरिषुः ॥ 10. लृङ् । अजागरिष्यत् ॥

[१८२] दरिद्रा = दुर्गतौ । अक० । सेट् । पर० । to be poor; to be needy. 1. लट् । प्र० दरिद्राति । दरिद्रितः । दरिद्रति ॥ म० दरिद्रासि । दरिद्रिथः । दरिद्रिथ ॥ उ० दरिद्रामि । दरिद्रिवः । दरिद्रिमः ॥ 2. लोट् । प्र० दरिद्रातु–दरिद्रितात् । दरिद्रिताम् । दरिद्रतु ॥ म० दरिद्रिहि–दरिद्रितात् । दरिद्रितम् । दरिद्रित ॥ उ० दरिद्राणि । दरिद्राव । दरिद्राम ॥ 3. लङ् । प्र० अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः ॥ म० अदरिद्राः । अदरिद्रितम् । अदरिद्रित ॥ उ० अदरिद्राम् । अदरिद्रिव । अदरिद्रिम ॥ 4. विधि० । दरिद्रियात् । दरिद्रियाताम् ॥

5. लिट् । प्र० ददरिद्रौ । ददरिद्रतुः । ददरिद्रुः ॥ म० ददरिद्रिथ । ददरिद्रथुः । ददरिद्र ॥ उ० ददरिद्रौ । ददरिद्रिव । ददरिद्रिम ॥ पक्षे–दरिद्रांचकार–दरिद्रांबभूव–दरिद्रामास ॥ 6. लुट् । दरिद्रिता ॥ 7. लृट् । दरिद्रिष्यति ॥ 8. आशी० । दरिद्र्यात् । दरिद्र्यास्ताम् ॥ 9. लुङ् । VII. प्र० अदरिद्रीत् । अदरिद्रिष्टाम् । अदरिद्रिषुः ॥ म० अदरिद्रीः ॥ उ० अदरिद्रिषम् ॥ पक्षे–IV. अदरिद्रासीत् । अदरिद्रासिष्टाम् इत्यादि । 10. लृङ् । अदरिद्रिष्यत् ॥

[१८३] या = प्रापणे । सक० । अनि० । पर० । to go.

1. लट् । प्र० याति । यातः । यान्ति ॥ म० यासि । याथः । याथ ॥ उ० यामि । यावः । यामः ॥ 2. लोट् । प्र० यातु--यातात् । याताम् । यान्तु ॥ म० याहि--यातात् । यातम् । यात ॥ उ० यानि । याव । याम ॥ 3. लङ् । प्र० अयात् । अयाताम् । अयुः--अयान् ॥ म० अयाः । अयातम् । अयात ॥ उ० अयाम् । अयाव । अयाम ॥ 4. विधि० । यायात् । यायाताम् ॥

5. लिट् । प्र० ययौ । ययतुः । ययुः ॥ म० ययिथ--ययाथ । ययथुः । यय ॥ उ० ययौ । ययिव । ययिम ॥ 6. लुट् । याता ॥ 7. लृट् । यास्यति ॥ 8. आशी० । यायात् । यायास्ताम् ॥ 9. लुङ् । IV. अयासीत् । अयासिष्टाम् ॥ 10. लृङ् । अयास्यत् ॥

[१८४] द्रा = कुत्सायां गतौ । निपूर्वः स्वापे । अक० । अनि० । पर० । with नि, to sleep या (१८३) धातुवत् । 8. आशी० । द्रायात् । द्रायास्ताम्--द्रेयात् । द्रेयास्ताम् इति विशेषः ।

[१८५] पा = रक्षणे । सक० । अनि० । पर० । to protect. या (१८३) धातुवत् । पाति ॥

[१८६] भा = दीप्तौ । अक० । अनि० । पर० । to shine. या (१८३) धातुवत् । 1. लट् । भाति ॥ 5. लिट् । बभौ ॥

[१८७] मा = माने । अक० । अनि० । पर० । to measure; to limit. या (१८३) धातुवत् । माति ॥ ममौ ॥ 8. आशी० । मेयात् । मेयास्ताम् । इति विशेषः ॥

[१८८] रा = दाने । सक० । अनि० । पर० । to give. या (१८३) धातुवत् । राति ॥ ररौ ॥

[१८९] ला = आदाने । सक० । अनि० । पर० । to take; to obtain. या (१८३) धातुवत् । लाति ॥ ललौ ॥

[१९०] वा = गतिगन्धनयोः । अक० । अनि० । पर० । to blow; to go; to strike; to kill. या (१८३) धातुवत् । वाति ॥ ववौ ॥

[१९१] श्रा = पाके । सक० । अनि० । पर० । to cook. या (१८३) धातुवत् । श्राति ॥ शश्रौ ॥ 8. आशी० । श्रायात् । श्रायास्ताम्--श्रेयात् । श्रेयास्ताम् ॥

[१९२] ष्णा (स्ना) = शौचे । अक० । अनि० । पर० । to bathe; to perform an ablution. या (१८३) धातुवत् ॥ स्नाति ॥ सस्नौ ॥ 8. आशी० । श्रा (१९१) धातुवत् ॥

[१९३] प्सा = भक्षणे । सक० । अनि० । पर० । to eat. to devour. श्रा (१९१) धातुवत् । प्साति ॥ पप्सौ ॥

[१९४] इण् (इ) = गतौ । सक० । अनि० । पर० । to go.

1. लट् । प्र० एति । इतः । यन्ति ॥ म० एषि । इथः । इथ ॥ उ० एमि । इवः । इमः ॥ 2. लोट् । प्र० एतु--इतात् । इताम् । यन्तु ॥ म० इहि--इतात् । इतम् । इत ॥ उ० अयानि । अयाव ॥ अयाम । 3. लङ् । प्र० ऐत् । ऐताम् । आयन् ॥ म० ऐः । ऐतम् । ऐत ॥ उ० आयम् । ऐव । ऐम ॥ 4. विधि० । प्र० इयात् । इयाताम् । इयुः ॥ म० इयाः । इयातम् । इयात ॥ उ० इयाम् । इयाव । इयाम ॥

5. लिट् । प्र० इयाय । ईयतुः । ईयुः ॥ म० इययिथ--इयेथ । ईयथुः । ईय ॥ उ० इयाय--इयय । ईयिव । ईयिम ॥ 6. लुट् । एता ॥ 7. लृट् । एष्यति ॥ 8. आशी० । ईयात् । ईयास्ताम् ॥ 9. लुङ् । I. प्र० अगात् । अगाताम् । अगुः॥ म० अगाः । अगातम् । अगात ॥ उ० अगाम् । अगाव । अगाम ॥ 10. लृङ् । ऐष्यत् ॥

[१९५] यु = मिश्रणे अमिश्रणे च ॥ सक० । सेट् । पर० । to join; to separate. 1. लट् । प्र० यौति । युतः । युवन्ति ॥ म० यौषि । युथः । युथ ॥ उ० यौमि । युवः । युमः ॥ 2. लोट् । प्र० यौतु--युतात् । युताम् । युवन्तु ॥ म० युहि--युतात् । युतम् । युत ॥ उ० यवानि । यवाव । यवाम ॥ 3. लङ् । प्र० अयौत् । अयुताम् । अयुवन् ॥ म० अयौः । अयुतम् । अयुत ॥ उ० अयवम् । अयुव ।

अयुम ॥ 4. **विधि०** । **प्र०** युयात् । युयाताम् । युयुः ॥ **म०** युयाः । युयातम् । युयात ॥ **उ०** युयाम् । युयाव । युयाम ॥

5. **लिट्** । **प्र०** युयाव । युयुवतुः । युयुवुः ॥ **म०** युयविथ । युयुवथुः । युयुव ॥ **उ०** युयाव--युयव । युयुविव । युयुविम ॥ 6. **लुट्** । यविता ॥ 7. **लृट्** । यविष्यति ॥ 8. **आशी०** । यूयात् । यूयास्ताम् ॥ 9. **लुङ्** । VII. अयावीत् । अयाविष्टाम् । अयाविषुः ॥ 10. **लृङ्** । अयविष्यत् ॥

[१९६] **णु** = (नु) स्तुतौ । सक० । सेट् । पर० । to praise. **यु** (१९५) धातुवत् । नौति ॥ नुनाव ॥

[१९७] **क्ष्णु** = तेजने । सक० । सेट् । पर० । to sharpen. **यु** (१९५) धातुवत् । क्ष्णौति ॥ चुक्ष्णाव ॥

[१९८] **ष्णु** = (स्नु) प्रस्रवणे । सक० । सेट् । पर० । to flow; to distil. **यु** (१९५) धातुवत् । स्नौति ॥ सुष्णाव ॥

[१९९] **रु** = शब्दे । अक० । सेट् । पर० । to cry; to yell; to hum. 1. **लट्** । **प्र०** रौति--रवीति । रुतः--रुवीतः । रुवन्ति ॥ **म०** रौषि--रवीषि । रुथः--रुवीथः । रुथ--रुवीथ ॥ **उ०** रौमि--रवीमि । रुवः--रुवीवः । रुमः--रुवीमः ॥ 2. **लोट्** । **प्र०** रौतु--रवीतु । रुतात्--रुवीतात् ।

रुताम्--रुवीताम् । रुवन्तु ॥ म० रुहि--रुवीहि--रुतात्--रुवीतात् । रुतम्--रुवीतम् । रुत--रुवीत ॥ उ० रवाणि । रवाव । रवाम ॥ 3. लङ् । प्र० अरौत्--अरवीत् । अरुताम्--अरुवीताम् । अरुवन् ॥ म० अरौः--अरवीः । अरुतम्--अरुवीतम् । अरुत--अरुवीत ॥ उ० अरवम् । अरुव--अरुवीव । अरुम--अरुवीम ॥ 4. विधि० । प्र० रुयात्--रुवीयात् । रुयाताम्--रुवीयाताम् । रुयुः--रुवीयुः ॥ म० रुयाः--रुवीयाः । रुयातम्--रुवीयातम् । रुयात--रुवीयात ॥ उ० रुयाम्--रुवीयाम् । रुयाव--रुवीयाव । रुयाम--रुवीयाम ॥ आर्धधातुके । यु (१९५) धातुवत् । रुराव ॥ रविता । इत्याद्येकमेव रूपम् ॥

[२००] **चकास्** (चकास्) = दीप्तौ । अक० । सेट् । पर० । to shine. 1. लट् । प्र० चकास्ति । चकास्तः । चकासति ॥ म० चकास्सि । चकास्थः । चकास्थ ॥ उ० चकास्मि चकास्वः । चकास्मः ॥ 2. लोट् । प्र० चकास्तु--चकास्तात् । चकास्ताम् । चकासतु ॥ म० चकाधि--चकाद्धि--चकास्तात् । चकास्तम् । चकास्त ॥ उ० चकासानि । चकासाव । चकासाम ॥ 3. लङ् । प्र० अचकात्--द् । अचकास्ताम् । अचकासुः ॥ म० अचकात्--द्--अचकाः । अचकास्तम् । अचकास्त ॥ उ० अचकासम् । अचकास्व । अचकास्म ॥ 4. विधि० । चकास्यात् । चकास्याताम् ॥

5. **लिट्** । चकासांचकार--चकासांबभूव--चकासामास ॥ 6. **लुट्** । चकासिता ॥ 7. **लृट्** । चकासिष्यति ॥ 8. **आशी०** । चकास्यात् । चकास्यास्ताम् ॥ 9. **लुङ्** । VII. अचकासीत् ॥ 10. **लृङ्** । अचकासिष्यत् ॥

[२०१] **शासु** (शास्) = अनुशिष्टौ । द्विक० । सेट् । पर० । to teach; to inform; to govern; to advise. 1. **लट्** । **प्र०** शास्ति । शिष्टः । शासति ॥ **म०** शास्सि । शिष्ठः । शिष्ठ ॥ **उ०** शास्मि । शिष्वः । शिष्मः ॥ 2. **लोट्** । **प्र०** शास्तु--शिष्टात् । शिष्टाम् । शासतु ॥ **म०** शाधि--शिष्टात् । शिष्टम् । शिष्ट ॥ **उ०** शासानि ॥ 3. **लङ्** । **प्र०** अशात्--द् । अशिष्टाम् । अशासुः ॥ **म०** अशात्--द्- अशाः । अशिष्टम् । अशिष्ट ॥ **उ०** अशासम् । अशिष्व । अशिष्म ॥ 4. **विधि०** । शिष्यात् । शिष्याताम् ॥

5. **लिट्** । **प्र०** शशास । शशासतुः । शशासुः ॥ **म०** शशासिथ । शशासथुः । शशास ॥ **उ०** शशास । शशासिव । शशासिम ॥ 6. **लुट्** । शासिता ॥ 7. **लृट्** । शासिष्यति ॥ 8. **आशी०** । शिष्यात् । शिष्यास्ताम् ॥ 9. **लुङ्** । II. अशिषत् । अशिषताम् । अशिषन् ॥ 10. **लृङ्** । अशासिष्यत् ॥

[२०२] वश=कान्तौ । सक० । सेट् । पर० । to wish; to shine. 1. लट् । प्र० वष्टि । उष्टः । उशन्ति ॥ म० वक्षि । उष्ठः । उष्ठ ॥ उ० वश्मि । उश्वः । उश्मः ॥ 2. लोट् । प्र० वष्टु--उष्टात् । उष्टाम् । उशन्तु ॥ म० उड्ढि--उष्टात् । उष्टम् । उष्ट ॥ उ० वशानि । वशाव । वशाम ॥ 3. लङ् । प्र० अवट्--ड् । औष्टाम् । औशन् ॥ म० अवट्--ड् । औष्टम् । औष्ट ॥ उ० अवशम् । औश्व । औश्म ॥ 4. विधि० । उश्यात् । उश्याताम् ॥

5. लिट् । प्र० उवाश । ऊशतुः । ऊशुः ॥ म० उवशिथ । ऊशथुः । ऊश ॥ उ० उवाश--उवश । ऊशिव । ऊशिम ॥ 6. लुट् । वशिता ॥ 7. लृट् । वशिष्यति ॥ 8. आशी० । उश्यात् । उश्यास्ताम् ॥ 9. लुङ् । VII. अवशीत्--अवाशीत् ॥ 10. लृङ् । अवशिष्यत् ॥

[२०३] इक् (इ) । नित्यमधिपूर्वः । स्मरणे । सक० । अनि० । पर० । to think; to remember. 1. लट् । प्र० अध्येति । अधीतः । अधियन्ति--अधीयन्ति ॥ म० अध्येषि । अधीथः । अधीथ ॥ उ० अध्येमि । अधीवः । अधीमः ॥ 2. लोट् । प्र० अध्येतु--अधीतात् । अधीताम् । अधियन्तु--अधीयन्तु ॥ म० अधीहि--अधीतात् । अधीतम् । अधीत ॥ उ० अध्ययानि । अध्ययाव । अध्ययाम ॥ 3. लङ् । प्र०

अध्यैन् । अध्यैताम् । अध्यायन् ॥ म० अध्यैः । अध्यैतम् । अध्यैत ॥ उ० अध्यायम् । अध्यैव । अध्यैम ॥ 4. विधि० । अधीयात् । अधीयाताम् । अधीयुः ॥

5. लिट् । प्र० अधीयाय । अधीयतुः । अधीयुः ॥ म० अधीययिथ--अधीयेथ । अधीयथुः । अधीय ॥ उ० अधीयाय--अधीयय । अधीयिव । अधीयिम ॥ 6. लुट् । अध्येता ॥ 7. लृट् । अध्येष्यति ॥ 8. आशी० । अधीयात् । अधीयास्ताम् ॥ 9. लुङ् । 1. प्र० अध्यगात् । अध्यगाताम् । अध्यगुः ॥ म० अध्यगाः । अध्यगातम् । अध्यगात ॥ उ० अध्यगाम् । अध्यगाव । अध्यगाम ॥ 10. लृङ् । अध्यैष्यत् ॥

[२०४] वी = गतिव्याप्तिप्रजनकान्त्यसनखादनेषु -- सक० -- अक० । अनि० । पर० । to go ; to pervade ; to conceive ; to become pregnant, to eat ; to throw ; to shine. 1. लट् । वेति । वीतः । वियन्ति ॥ म० वेषि । वीथः । वीथ ॥ उ० वेमि । वीवः । वीमः ॥ 2. लोट् । प्र० वेतु—वीतात् । वीताम् । वियन्तु ॥ म० वीहि—वीतात् । वीतम् । वीत ॥ उ० वयानि । वयाव । वयाम ॥ 3. लङ् । प्र० अवेत् । अवीताम् । अवियन्--अव्यन् ॥ म० अवेः । अवीतम् । अवीत ॥ उ० अवयम् । अवीव । अवीम ॥ 4. विधि० । वीयात् । वीयाताम् ॥

5. **लिट्** । **प्र०** विवाय । विव्यतुः । विव्युः ॥ **म०** विवयिथ--विवेथ । विव्यथुः । विव्य ॥ **उ०** विवाय--विवय । विव्यिव । विव्यिम ॥ 6. **लुट्** । वेता ॥ वेतासि ॥ वेतास्मि ॥ 7. **लृट्** । वेष्यति ॥ 8. **आशी०** । वीयात् । वीयास्ताम् ॥ 9. **लुङ्** । VI. अवैषीत् । अवैष्टाम् । अवैषुः ॥ 10. **लृङ्** । अवेष्यत् ॥

# अथ अदादौ आत्मनेपदिनः ।

[२०५] **आस** = उपवेशने । अक० । सेट् । आत्म० । to sit; to be. 1. **लट्** । **प्र०** आस्ते । आसाते । आसते ॥ **म०** आस्से । आसाथे । आध्वे ॥ **उ०** आसे । आस्वहे । आस्महे ॥ 2. **लोट्** । **प्र०** आस्ताम् । आसाताम् । आसताम् ॥ **म०** आस्स्व । आसाथाम् । आध्वम् ॥ **उ०** आसै । आसावहै । आसामहै ॥ 3. **लङ्** । **प्र०** आस्त । आसाताम् । आसत ॥ **म०** आस्थाः । आसाथाम् । आध्वम् ॥ **उ०** आसि । आस्वहि । आस्महि ॥ 4. **विधि०** । **प्र०** आसीत । आसीयाताम् । आसीरन् ॥ **म०** आसीथाः । आसीयाथाम् । आसीध्वम् ॥ **उ०** आसीय । आसीवहि । आसीमहि ॥

5. **लिट्** । **प्र०** आसांचक्रे । आसांचक्राते । आसांचक्रिरे—आसांबभूव । आसांबभूवतुः । आसांबभूवुः ॥--आसामास । आसामासतुः । आसामासुः । इत्यादि **एध** (१०४) धातुवत् ॥ 6. **लुट्** । **प्र०** आसिता ॥ **म०** आसितासे ॥ **उ०** आसिताहे ॥ 7. **लृट्** । आसिष्यते ॥ 8. **आशी०** । आसिषीष्ट । आसिषीयास्ताम् ॥ 9. **लुङ्** । XI. आसिष्ट ।

आसिषाताम् । आसिषत ॥ म० आसिष्ठाः । आसिषाथाम् । आसिध्वम्--ढ्वम् ॥ उ० आसिषि । आसिष्वहि । आसिष्महि॥ 10. लृङ् । आसिष्यत ॥

[२०६] ईड = स्तुतौ । सक० । सेट् । आत्म० । to praise.
1. लट् । प्र० ईट्टे । ईडाते । ईडते ॥ म० ईडिषे । ईडाथे । ईडिध्वे ॥ उ० ईडे । ईड्वहे । ईड्महे ॥ 2. लोट् । प्र० ईट्टाम् । ईडाताम् । ईडताम् ॥ म० ईडिष्व । ईडाथाम् । ईडिध्वम् ॥ उ० ईडै । ईडावहै । ईडामहै ॥ 3. लङ् । प्र० ऐट्ट । ऐडाताम् । ऐडत ॥ म० ऐट्ठाः । ऐडाथाम् । ऐड्ढ्वम् ॥ उ० ऐडि । ऐड्वहि । ऐड्महि ॥ 4. विधि० । प्र० ईडीत । ईडीयाताम् । ईडीरन् ॥ म० ईडीथाः । ईडीयाथाम् । ईडीध्वम् ॥ उ० ईडीय । ईडीवहि । ईडीमहि ॥

5. लिट् । ईडांचक्रे इत्यादि एध (१०४) धातुवत् ॥ 6. लुट् । ईडिता ॥ ईडितासे ॥ 7. लृट् । ईडिष्यते ॥ 8. आशी० । ईडिषीष्ट । ईडिषीयास्ताम् ॥ म० ईडिषीध्वम् ॥ 9. लुङ् । XI. प्र० ऐडिष्ट ॥ म० ऐडिध्वम् -ढ्वम् ॥ 10. लृङ् । ऐडिष्यत ॥

[२०७] ईश = ऐश्वर्ये । अक० । सेट् । आत्म० । to rule; to command. ईड (२०६) धातुवत् । 1. लट् । प्र० ईष्टे । ईशाते । ईशते ॥ म० ईशिषे । ध्वे ॥ उ० ईशे ।

ईश्वहे ॥ 2. लोट् । ईष्टाम् ॥ 3. लङ् । ऐष्ट ॥ 4. विधि० । ईशीत । ईशीयाताम् ॥ 5. लिट् । ईशांचक्रे ॥ 9. लुङ् । XI. प्र० ऐशिष्ट ॥ म० ऐशिध्वम्--ढ्वम् ॥

[२०८] वस = आच्छादने । सक० । सेट् । आत्म० । to wear; to dress. 1. लट् । प्र० वस्ते । वसाते । वसते ॥ म० वस्से । वसाथे । वध्वे ॥ उ० वसे । वस्वहे । वस्महे ॥ 2. लोट् । प्र० वस्ताम् । वसाताम् । वसताम् ॥ म० वस्स्व । वसाथाम् । वध्वम् ॥ उ० वसै । वसावहै । वसामहै ॥ 3. लङ् । प्र० अवस्त । अवसाताम् । अवसत ॥ म० अवस्थाः । अवसाथाम् । अवध्वम् ॥ उ० अवसि । अवस्वहि । अवस्महि ॥ 4. विधि० । वसीत । वसीयाताम् । वसीरन् ॥

5. लिट् । प्र० ववसे । ववसाते । ववसिरे ॥ म० ववसिषे । ववसाथे । ववसिध्वे ॥ उ० ववसे । ववसिवहे । ववसिमहे ॥ 6. लुट् । प्र० वसिता ॥ म० वसितासे ॥ 7. लृट् । वसिष्यते ॥ 8. आशी० । वसिषीष्ट ॥ 9. लुङ् । XI. प्र० अवसिष्ट ॥ म० अवसिष्ठाः । अवसिढ्वम्--ध्वम् ॥ उ० अवसिषि । अवसिष्वहि ॥ 10. लृङ् । अवसिष्यत ॥

[२०९] आङः शासु (आशास्) = इच्छायाम् ॥ सक० । सेट् । आत्म० । to expect; to bless. 1. लट् ।

प्र० आशास्ते । आशासाते । आशासते ॥ म० आशास्से । आशासाथे । आशाध्वे ॥ उ० आशासे । आशास्वहे । आशास्महे ॥ 2. लोट् । प्र० आशास्ताम् । आशासाताम् । आशासताम् ॥ म० आशास्स्व । आशासाथाम् । आशाध्वम् ॥ उ० आशासै । आशासावहै । आशासामहै ॥ 3. लङ् । प्र० आशास्त । आशासाताम् । आशासत ॥ म० आशास्थाः । आशासाथाम । आशाध्वम् ॥ उ० आशासि । आशास्वहि । आशास्महि ॥ 4. विधि० । प्र० आशासीत । आशासीयाताम् । आशासीरन् ॥ म० आशासीथाः । आशासीयाथाम् । आशासीध्वम् ॥ उ० आशासीय । आशासीवहि । आशासीमहि ॥

5. लिट् । प्र० आशशासे । आशशासाते । आशशासिरे ॥ म० आशशासिषे । आशशासाथे । आशशासिध्वे ॥ उ० आशशासे । आशशासिवहे । आशशासिमहे ॥ 6. लुट् । प्र० आशासिता ॥ म० आशासितासे ॥ उ० आशासिताहे ॥ 7. लृट् । आशासिष्यते ॥ 8. आशी० । प्र० आशासिषीष्ट ॥ म० आशासिषीष्ठाः ॥ उ० आशासिषीय ॥ 9. लुङ् । XI. प्र० आशासिष्ट । आशासिषाताम् । आशासिषत ॥ म० आशासिष्ठाः । आशासिषाथाम् । आशासिध्वम्--ढ्वम् ॥ उ० आशासिषि । आशासिष्वहि । आशासिष्महि ॥ 10. लृङ् । आशासिष्यत ॥

[२१०] **षूङ्** (सू) = प्राणिगर्भविमोचने। सक०। सेट्। आत्म०। to bring forth as a child. 1. **लट्**। **प्र०** सूते। सुवाते। सुवते॥ **म०** सूषे। सुवाथे। सूध्वे॥ **उ०** सुवे। सूवहे। सूमहे॥ 2. **लोट्**। **प्र०** सूताम्। सुवाताम्। सुवताम्॥ **म०** सूष्व। सुवाथाम्। सूध्वम्॥ **उ०** सुवै। सुवावहै। सुवामहै॥ 3. **लङ्**। **प्र०** असूत। असुवाताम्। असुवत॥ **म०** असूथाः। असुवाथाम्। असूध्वम्॥ **उ०** असुवि। असूवहि। असूमहि॥ 4. **विधि०**। सुवीत। सुवीयाताम्। सुवीरन्॥

5. **लिट्**। **प्र०** सुषुवे। सुषुवाते। सुषुविरे॥ **म०** सुषुविषे। सुषुवाथे। सुषुविध्वे--ढ्वे॥ **उ०** सुषुवे। सुषुविवहे। सुषुविमहे॥ 6. **लुट्**। सविता--सोता॥ 7. **लृट्**। सविष्यते--सोष्यते॥ 8. **आशी०**। **प्र०** सविषीष्ट। सविषीयास्ताम्। सविषीरन्--सोषीष्ट। सोषीयास्ताम्। सोषीरन्॥ **म०** सविषीष्ठाः। सविषीयास्थाम्। सविषीध्वम्--ढ्वम्--सोषीष्ठाः। सोषीयास्थाम्--सोषीढ्वम्॥ 9. **लुङ्**। XI. **प्र०** असविष्ट। असविषाताम्। असविषत--असोष्ट। असोषाताम्। असोषत॥ **म०** असोष्ठाः। असोषाथाम्। असोढ्वम्। असविष्ठाः। असविषाथाम्। असविध्वम्--ढ्वम्॥ 10. **लृङ्**। असविष्यत--असोष्यत॥

[२११] **शीङ्** (शी) = स्वप्ने। अक०। सेट्। आत्म०।

to sleep; to lie down. 1. लट् । प्र० शेते । शयाते । शेरते ॥ म० शेषे । शयाथे । शेध्वे ॥ उ० शये । शेवहे । शेमहे ॥ 2. लोट् । प्र० शेताम् । शयाताम् । शेरताम् ॥ म० शेष्व । शयाथाम् । शेध्वम् ॥ उ० शयै । शयावहै । शयामहै ॥ 3. लङ् । प्र० अशेत । अशयाताम् । अशेरत ॥ म० अशेथाः । अशयाथाम् । अशेध्वम् ॥ उ० अशयि । अशेवहि । अशेमहि ॥ 4. विधि० । प्र० शयीत । शयीयाताम् । शयीरन् ॥ म० शयीथाः । शयीयाथाम् । शयीध्वम् ॥ उ० शयीय । शयीवहि । शयीमहि ॥ 5. लिट् । प्र० शिश्ये । शिश्याते । शिश्यिरे ॥ म० शिश्यिषे । शिश्याथे । शिश्यिढ्वे-ध्वे ॥ उ० शिश्ये । शिश्यिवहे । शिश्यिमहे ॥ 6. लुट् । शयिता ॥ 7. लृट् । शयिष्यते ॥ 8. आशी० । प्र० शयिषीष्ट । शयिषीयास्ताम् । शयिषीरन् ॥ म० शयिषीध्वम्-ढ्वम् ॥ 9. लुङ् । XI. प्र० अशयिष्ट । अशयिषाताम् । अशयिषत ॥ म० अशयि ढ्वम्-ध्वम् ॥ 10. लृङ् । अशयिष्यत ॥

[२१२] इङ् (इ) = अध्ययने । सक० । अनि० । आत्म० । नित्यमधिपूर्वः । to study. 1. लट् । प्र० अधीते । अधीयाते । अधीयते ॥ म० अधीषे । अधीयाथे । अधीध्वे ॥ उ० अधीये । अधीवहे । अधीमहे ॥ 2. लोट् । प्र० अधीताम् । अधीयाताम् । अधीयताम् ॥ म० अधीष्व । अधी-

याथाम् । अधीध्वम् ॥ उ० अध्ययै । अध्ययावहै । अध्ययामहै ॥ 3. लङ् । प्र० अध्यैत । अध्यैयाताम् । अध्यैयत ॥ म० अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् ॥ उ० अध्यैयि । अध्यैवहि । अध्यैमहि ॥ 4. विधि० । प्र० अधीयीत । अधीयीयाताम् । अधीयीरन् ॥ म० अधीयीथाः । अधीयीयाथाम् । अधीयीध्वम् ॥ उ० अधीयीय । अधीयीवहि । अधीयीमहि ॥

5. लिट् । प्र० अधिजगे । अधिजगाते । अधिजगिरे ॥ म० अधिजगिषे । अधिजगाथे । अधिजगिध्वे ॥ उ० अधिजगे । अधिजगिवहे । अधिजगिमहे ॥ 6. लुट् । अध्येता ॥ अध्येतासे ॥ 7. लृट् । अध्येष्यते ॥ 8. आशी० । प्र० अध्येषीष्ट । अध्येषीयास्ताम् । अध्येषीरन् ॥ म० अध्येषीष्ठाः । अध्येषीयास्थाम् । अध्येषीढ्वम् ॥ उ० अध्येषीय । अध्येषीवहि । अध्येषीमहि ॥ 9. लुङ् । XI. प्र० अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत ॥ म० अध्यगीष्ठाः । अध्यगीषाथाम् । अध्यगीढ्वम् ॥ उ० अध्यगीषि । अध्यगीष्वहि । अध्यगीष्महि ॥ पक्षे—प्र० अध्यैष्ट । अध्यैषाताम् । अध्यैषत । म० अध्यैष्ठाः । अध्यैषाथाम् । अध्यैढ्वम् ॥ उ० अध्यैषि । अध्यैष्वहि । अध्यैष्महि ॥ 10. लृङ् । अध्यगीष्यत--अध्यैष्यत ॥

# अथ अदादौ उभयपदिनः ।

[२१३] **द्विष** = अप्रीतौ । सक० । अनि० । उभ० । to hate; to dislike. **परस्मैपदे** 1. **लट्** । **प्र०** द्वेष्टि । द्विष्टः । द्विषन्ति ॥ **म०** द्वेक्षि । द्विष्ठः । द्विष्ठ ॥ **उ०** द्वेष्मि । द्विष्वः । द्विष्मः ॥ 2. **लोट्** । **प्र०** द्वेष्टु--द्विष्टात् । द्विष्टाम् । द्विषन्तु ॥ **म०** द्विड्ढि--द्विष्टात् । द्विष्टम् । द्विष्ट ॥ **उ०** द्वेषाणि । द्वेषाव । द्वेषाम ॥ 3. **लङ्** । **प्र०** अद्वेट्--अद्वेड् । अद्विष्टाम् । अद्विषन्--अद्विषुः ॥ **म०** अद्वेट्--अद्वेड् । अद्विष्टम् । अद्विष्ट ॥ **उ०** अद्वेषम् । अद्विष्व । अद्विष्म ॥ 4. **विधि०** । **प्र०** द्विष्यात् । द्विष्याताम् ॥

5. **लिट्** । **प्र०** दिद्वेष । दिद्विषतुः । **म०** दिद्वेषिथ । दिद्विषथुः । दिद्विष ॥ **उ०** दिद्वेष । दिद्विषिव । दिद्विषिम ॥ 6. **लुट्** । द्वेष्टा ॥ द्वेष्टासि ॥ 7. **लृट्** । द्वेक्ष्यति ॥ 8. **आशी०** । द्विष्यात् । द्विष्यास्ताम् ॥ 9. **लुङ्** । V. **प्र०** अद्विक्षत् । अद्विक्षताम् । अद्विक्षन् ॥ **म०** अद्विक्षः । अद्विक्षतम् । अद्विक्षत ॥ **उ०**

अद्विक्षम् । अद्विक्षाव । अद्विक्षाम ॥ 10. लृङ् । अद्वेक्ष्यत् ॥

**आत्मनेपदे**-- 1. लट् । प्र० द्विष्टे । द्विषाते । द्विषते ॥ म० द्विक्षे । द्विषाथे । द्विड्ढ्वे । उ० द्विषे । द्विष्वहे । द्विष्महे ॥ 2. **लोट्** । प्र० द्विष्टाम् । द्विषाताम् । म० द्विषताम् ॥ म० द्विक्ष्व । द्विषाथाम् । द्विड्ढ्वम् ॥ उ० द्वेषै । द्वेषावहै । द्वेषामहै ॥ 3. **लङ्** । प्र० अद्विष्ट । अद्विषाताम् । अद्विषत ॥ म० अद्विष्ठाः । अद्विषाथाम् । अद्विड्ढ्वम् ॥ उ० अद्विषि । अद्विष्वहि । अद्विष्महि ॥ 4. **विधि०** । प्र० द्विषीत । द्विषीयाताम् । द्विषीरन् ॥ म० द्विषीथाः । द्विषीयाथाम् । द्विषीध्वम् ॥ उ० द्विषीय । द्विषीवहि । द्विषीमहि ॥

5. **लिट्** । प्र० दिद्विषे । दिद्विषाते । दिद्विषिरे ॥ म० दिद्विषिषे । दिद्विषाथे । दिद्विषिध्वे ॥ उ० दिद्विषे । दिद्विषिवहे । दिद्विषिमहे ॥ 6. **लुट्** । प्र० द्वेष्टा ॥ म० द्वेष्टासे ॥ उ० द्वेष्टाहे ॥ 7. लृट् । द्वेक्ष्यते ॥ 8. **आशी०** । प्र० द्विक्षीष्ट । द्विक्षीयास्ताम् । द्विक्षीरन् ॥ म० द्विक्षीष्ठाः । द्विक्षीयास्थाम् । द्विक्षीध्वम् ॥ उ० द्विक्षीय । द्विक्षीवहि । द्विक्षीमहि ॥ 9. **लुङ्** । XII. प्र० अद्विक्षत । अद्विक्षाताम् । अद्विक्षन्त ॥ म० अद्विक्षथाः । अद्विक्षाथाम् । अद्विक्षध्वम् ॥ उ० अद्विक्षि । अद्विक्षावहि । अद्विक्षामहि ॥ 10. लृङ् । अद्वेक्ष्यत ॥

[२१४] दुह = प्रपूरणे । सक० । अनि० । उभ० । to milk; to extract; to yield.

परस्मैपदे—1. लट् । प्र० दोग्धि । दुग्धः । दुहन्ति ॥ म० धोक्षि । दुग्धः ॥ दुग्ध ॥ उ० दोह्मि । दुह्वः । दुह्मः ॥ 2. लोट् । प्र० दोग्धु--दुग्धात् । दुग्धाम् । दुहन्तु ॥ म० दुग्धि--दुग्धात् । दुग्धम् । दुग्ध ॥ उ० दोहानि । दोहाव । दोहाम ॥ 3. लङ् । प्र० अधोक्--ग् । अदुग्धाम् । अदुहन् ॥ म० अधोक्--ग् । अदुग्धम् । अदुग्ध ॥ उ० अदोहम् । अदुह्व । अदुह्म ॥ 4. विधि० । प्र० दुह्यात् । दुह्याताम् । दुह्युः ॥

5. लिट् । प्र० दुदोह । दुदुहतुः । दुदुहुः ॥ म० दुदोहिथ । दुदुहथुः । दुदुह ॥ उ० दुदोह । दुदुहिव । दुदुहिम ॥ 6. लुट् । दोग्धा ॥ दोग्धासि ॥ 7. लृट् । धोक्ष्यति ॥ 8. आशी० । दुह्यात् । दुह्यास्ताम् । दुह्यासुः ॥ 9. लुङ् । V. प्र० अधुक्षत् । अधुक्षताम् । अधुक्षन् ॥ म० अधुक्षः । अधुक्षतम् । अधुक्षत ॥ उ० अधुक्षम् । अधुक्षाव । अधुक्षाम ॥ 10. लृङ् । अधोक्ष्यत् ॥

आत्मनेपदे—1. लट् । प्र० दुग्धे । दुहाते । दुहते ॥ म० धुक्षे । दुहाथे । धुग्ध्वे ॥ उ० दुहे । दुह्वहे । दुह्महे ॥ 2. लोट् । प्र० दुग्धाम् । दुहाताम् । दुहताम् ॥ म० धुक्ष्व ।

दुहाथाम् । धुग्ध्वम् ॥ उ० दोहै । दोहावहै । दोहामहै ॥ 3. लङ् । प्र० अदुग्ध । अदुहाताम् । अदुहत ॥ म० अदुग्धाः । अदुहाथाम् । अधुग्ध्वम् ॥ उ० अदुहि । अदुह्वहि । अदुह्महि ॥ 4. विधि० । दुहीत । दुहीयाताम् । दुहीरन् ॥

5. लिट् । प्र० दुदुहे । दुदुहाते । दुदुहिरे ॥ म० दुदुहिषे । दुदुहाथे । दुदुहिध्वे--ढ्वे ॥ उ० दुदुहे । दुदुहिवहे । दुदुहिमहे ॥ 6. लुट् । दोग्धा ॥ दोग्धासे ॥ 7. लृट् । धोक्ष्यते ॥ 8. आशी० । धुक्षीष्ट । धुक्षीयास्ताम् । धुक्षीरन् ॥ 9. लुङ् । X. प्र० अदुग्ध--अधुक्षत । अधुक्षाताम् ॥ अधुक्षन्त ॥ म० अदुग्धाः--अधुक्षथाः । अधुक्षाथाम् । अधुक्षध्वम्--अधुग्ध्वम् ॥ उ० अधुक्षि । अदुह्वहि--अधुक्षावहि । अधुक्षामहि ॥ 10. लृङ् । अधोक्ष्यत ॥

[२१५] दिह = उपचये । अक० । अनि० । उभ० । to increase; to anoint. दुह (२१४) धातुवत् । देग्धि ॥ दिग्धे ॥ इत्यादि ॥

[२१६] लिह = आस्वादने । सक० । अनि० । उभ० । to taste; to lick.

परस्मैपदे--1. लट् । प्र० लेढि । लीढः । लिहन्ति ॥ म० लेक्षि । लीढः । लीढ ॥ उ० लेह्मि । लिह्वः । लिह्मः ॥ 2. लोट् । प्र० लेढु--लीढात् । लीढाम् । लिहन्तु ॥ म०

लीढि--लीढात् । लीढम् । लीढ ॥ उ० लेहानि । लेहाव । लेहाम ॥ 3. लङ् । प्र० अलेट्--ड् । अलीढाम् । अलिहन् ॥ म० अलेट्--ड् । अलीढम् । अलीढ ॥ उ० अलेहम् । अलिह्व । अलिह्म ॥ 4. विधि० । लिह्यात् । लिह्याताम् ॥

5. लिट् । प्र० लिलेह । लिलिहतुः । लिलिहुः ॥ म० लिलेहिथ । लिलिहथुः । लिलिह ॥ उ० लिलेह । लिलिहिव । लिलिहिम ॥ 6. लुट् । लेढा ॥ 7. लृट् । लेक्ष्यति ॥ 8. आशी० । लिह्यात् । लिह्यास्ताम् ॥ 9. लुङ् । V. प्र० अलिक्षत् । अलिक्षताम् । अलिक्षन् ॥ 10. लृङ् । अलेक्ष्यत् ॥

आत्मनेपदे--1. लट् । प्र० लीढे । लिहाते । लिहते ॥ म० लिक्षे । लिहाथे । लीढ्वे ॥ उ० लिहे । लिह्वहे । लिह्महे ॥ 2. लोट् । प्र० लीढाम् । लिहाताम् । लिहताम् ॥ म० लिक्ष्व । लिहाथाम् । लीढ्वम् ॥ उ० लेहै । लेहावहै । लेहामहै ॥ 3. लङ् । प्र० अलीढ । अलिहाताम् । अलिहत ॥ म० अलीढाः । अलिहाथाम् । अलीढ्वम् ॥ उ० अलिहि । अलिह्वहि । अलिह्महि ॥ 4. विधि० । लिहीत । लिहीयाताम् । लिहीरन् ॥

5. लिट् । प्र० लिलिहे । लिलिहाते । लिलिहिरे ॥

म० लिलिक्षिषे। लिलिहाथे। लिलिहिढ्वे-ध्वे ॥ उ० लिलिहे। लिलिहिवहे। लिलिहिमहे ॥ 6. लुट्। लेढा। लेढासे ॥ 7. लृट्। लेक्ष्यते ॥ 8. आशी०। लिक्षीष्ट। लिक्षीयास्ताम्। लिक्षीरन् ॥ लिक्षीष्ठाः। लिक्षीयास्थाम्। लिक्षीध्वम् ॥ 9. लुङ्। X. प्र० अलिक्षत--अलीढ। अलिक्षाताम्। अलिक्षन्त ॥ म० अलिक्षथाः--अलीढाः। अलिक्षाथाम्। अलीढ्वम्--अलिक्षध्वम् ॥ उ० अलिक्षि। अलिक्षावहि--अलिह्वहि। अलिक्षामहि ॥ 10. लृङ्। अलेक्ष्यत ॥

[२१७] ष्टुञ् (स्तु) = स्तुतौ। सक०। अनि०। उभ०। to praise; to glorify.

1. लट्। प्र० स्तौति--स्तवीति। स्तुतः--स्तुवीतः। स्तुवन्ति ॥ म० स्तौषि--स्तवीषि। स्तुथः--स्तुवीथः। स्तुथ--स्तुवीथ ॥ उ० स्तौमि--स्तवीमि। स्तुवः--स्तुवीवः। स्तुमः--स्तुवीमः ॥ 2. लोट्। प्र० स्तौतु--स्तवीतु- स्तुतात्--स्तुवीतात्। स्तुताम्--स्तुवीताम्। स्तुवन्तु ॥ म० स्तुहि--स्तुवीहि--स्तुतात्--स्तुवीतात्। स्तुतम्-स्तुवीतम्। स्तुत--स्तुवीत ॥ उ० स्तवानि। स्तवाव। स्तवाम ॥ 3. लङ्। प्र० अस्तौत्--अस्तवीत्। अस्तुताम्--अस्तुवीताम्। अस्तुवन् ॥ म० अस्तौः--अस्तवीः। अस्तुतम्--अस्तुवीतम्।

अस्तुत--अस्तुवीत ॥ उ० अस्तवम् । अस्तुव--अस्तुवीव । अस्तुम--अस्तुवीम ॥ 4. विधि० । प्र० स्तुयात्--स्तुवीयात् । स्तुयाताम्-स्तुवीयाताम् । स्तुयुः-स्तुवीयुः ॥ म० स्तुयाः--स्तुवीयाः । स्तुयातम्--स्तुवीयातम् । स्तुयात--स्तुवीयात ॥ उ० स्तुयाम्--स्तुवीयाम् । स्तुयाव--स्तुवीयाव । स्तुयाम--स्तुवीयाम ॥

5. लिट् । प्र० तुष्टाव । तुष्टुवतुः । तुष्टुवुः ॥ म० तुष्टोथ । तुष्टुवथुः । तुष्टुव ॥ उ० तुष्टाव--तुष्टव । तुष्टुव । तुष्टुम ॥ 6. लुट् । स्तोता । 7. लृट् । स्तोष्यति ॥ 8. आशी० । स्तूयात् । स्तूयास्ताम् ॥ 9. लुङ् । प्र० VII. अस्तावीत् । अस्ताविष्टाम् । अस्ताविषुः ॥ 10. लृङ् । अस्तोष्यत् ॥

आत्मनेपदे--1. लट् । प्र० स्तुते-स्तुवीते । स्तुवाते । स्तुवते ॥ म० स्तुषे--स्तुवीषे । स्तुवाथे । स्तुध्वे--स्तुवीध्वे ॥ उ० स्तुवे । स्तुवहे--स्तुवीवहे । स्तुमहे--स्तुवीमहे ॥ 2. लोट् । प्र० स्तुताम्--स्तुवीताम् । स्तुवाताम् ॥ स्तुवताम् ॥ म० स्तुष्व--स्तुवीष्व । स्तुवाथाम् । स्तुध्वम्--स्तुवीध्वम् ॥ उ० स्तवै । स्तवावहै । स्तवामहै ॥ 3. लङ् । प्र० अस्तुत--अस्तुवीत । अस्तुवाताम् । अस्तुवत ॥ म० अस्तुथाः--अस्तुवीथाः । अस्तुवाथाम् । अस्तुध्वम्--अस्तुवीध्वम् ॥ उ०

अस्तुवि। अस्तुवहि--अस्तुवीवहि। अस्तुमहि-अस्तुवीमहि॥
4. **विधि०** । **प्र०** स्तुवीत। स्तुवीयाताम्। स्तुवीरन्॥

5. **लिट्** । **प्र०** तुष्टुवे। तुष्टुवाते। तुष्टुविरे॥ **म०** तुष्टुषे। तुष्टुवाथे। तुष्टुढ्वे॥ **उ०** तुष्टुवे। तुष्टुवहे। तुष्टुमहे॥ 6. **लुट्** । स्तोता॥ स्तोतासे॥ 7. **लृट्** । स्तोष्यते॥ 8. **आशी०** । **प्र०** स्तोषीष्ट। स्तोषीयास्ताम्। **म०** स्तोषीढ्वम्॥ 9. **लुङ्** । X. **प्र०** अस्तोष्ट। अस्तोषाताम्। अस्तोषत॥ **म०** अस्तोढ्वम्॥ 10. **लृङ्** । अस्तोष्यत॥

[२१८] **ब्रूञ्** (ब्रू) = व्यक्तायां वाचि। सक०। सेट्। वच्यादेशे त्वनिट्। उभ०। to speak clearly.

1. **लट्** । **प्र०** ब्रवीति--आह। ब्रूतः--आहतुः। ब्रुवन्ति--आहुः॥ **म०** ब्रवीषि--आत्थ। ब्रूथः--आहथुः। ब्रूथ॥ **उ०** ब्रवीमि। ब्रूवः। ब्रूमः॥ 2. **लोट्** । **प्र०** ब्रवीतु--ब्रूतात्। ब्रूताम्। ब्रुवन्तु॥ **म०** ब्रूहि--ब्रूतात्। ब्रूतम्। ब्रूत॥ **उ०** ब्रवाणि। ब्रवाव। ब्रवाम॥ 3. **लङ्** । **प्र०** अब्रवीत्। अब्रूताम्। अब्रुवन्॥ **म०** अब्रवीः। अब्रूतम्। अब्रूत॥ **उ०** अब्रवम्। अब्रूव। अब्रूम॥ 4. **विधि०** । **प्र०** ब्रूयात्। ब्रूयाताम्। ब्रूयुः॥

5. **लिट्** । **प्र०** उवाच। ऊचतुः। ऊचुः॥ **म०** उवचिथ--उवक्थ। ऊचथुः। ऊच॥ **उ०** उवाच--उवच।

ऊचिव । ऊचिम ॥ 6. लुट् । वक्ता ॥ वक्तासि ॥ 7. लृट् । वक्ष्यति ॥ 8. आशी० । उच्यात् । उच्यास्ताम् ॥ 9. लुङ् । II. प्र० अवोचत् । अवोचताम् । अवोचन् ॥ म० अवोचः । अवोचतम् । अवोचत ॥ उ० अवोचम् । अवोचाव । अवोचाम ॥ 10. लृङ् । अवक्ष्यत् ॥

**आत्मनेपदे**–1. लट् । प्र०.ब्रूते । ब्रुवाते । ब्रुवते ॥ म० ब्रूषे । ब्रुवाथे । ब्रूध्वे । उ० ब्रुवे । ब्रूवहे । ब्रूमहे ॥ 2. लोट् । प्र० ब्रूताम् । ब्रुवाताम् । ब्रुवताम् ॥ म० ब्रूष्व । ब्रुवाथाम् । ब्रूध्वम् ॥ उ० ब्रवै । ब्रवावहै । ब्रवामहै ॥ 3. लङ् । प्र० अब्रूत । अब्रुवाताम् । अब्रुवत ॥ म० अब्रूथाः । अब्रुवाथाम् । अब्रूध्वम् ॥ उ० अब्रुवि । अब्रूवहि । अब्रूमहि ॥ 4. विधि० । ब्रुवीत । ब्रुवीयाताम् । ब्रुवीरन् ॥

5. लिट् । प्र० ऊचे । ऊचाते । ऊचिरे ॥ म० ऊचिषे । ऊचाथे । ऊचिध्वे ॥ उ० ऊचे । ऊचिवहे । ऊचिमहे ॥ 6. लुट् । वक्ता । वक्तासे ॥ 7. लृट् । वक्ष्यते ॥ 8. आशी० । वक्षीष्ट । वक्षीयास्ताम् ॥ 9. लुङ् । VIII. प्र० अवोचत । अवोचेताम् । अवोचन्त ॥ 10. लृङ् । अवक्ष्यत ॥

इति अदादयः ॥ २ ॥

॥ श्री वेङ्कटेशायमङ्गलम् ॥

श्रीलक्ष्मीनृसिंहो विजयते ।

# मध्यमधातुरूपावल्याम् ।

## जुहोत्यादयः ॥ ३ ॥

### तत्र परस्मैपदिनः ।

[२१९] हु=दानादनयोः । सक० । अनि० । पर० । to offer ; to perform a sacrifice ; to eat.

1. लट् । प्र० जुहोति । जुहुतः । जुह्वति ॥ म० जुहोषि । जुहुथः । जुहुथ ॥ उ० जुहोमि । जुहुवः । जुहुमः ॥ 2. लोट् । प्र० जुहोतु–जुहुतात् । जुहुताम् । जुह्वतु ॥ म० जुहुधि–जुहुतात् । जुहुतम् । जुहुत ॥ उ० जुहवानि । जुहवाव । जुहवाम ॥ 3. लङ् । प्र० अजुहोत् । अजुहुताम् । अजुहवुः ॥ म० अजुहोः । अजुहुतम् । अजुहुत ॥ उ० अजुहवम् । अजुहुव । अजुहुम ॥ 4. विधि० । प्र० जुहुयात् । जुहुयाताम् । जुहुयुः ॥ म० जुहुयाः । जुहुयातम् । जुहुयात ॥ उ० जुहुयाम् । जुहुयाव । जुहुयाम ॥

5. **लिट्**। प्र० जुहाव। जुहुवतुः। जुहुवुः॥ म० जुहविथ--जुहोथ। जुहुवथुः। जुहुव॥ उ० जुहाव--जुहव। जुहुविव। जुहुविम॥ पक्षे--जुहवांचकार--जुहवांबभूव। जुहवामास॥ इत्याद्यपि॥ 6. लुट्। होता॥ होतासि॥ 7. लृट्। होष्यति॥ 8. आशी०। हूयात्। हूयास्ताम्। हूयासुः॥ 9. लुङ्। VI. प्र० अहौषीत्। अहौष्टाम्। अहौषुः॥ म० अहौषीः। अहौष्टम्। अहौष्ट॥ उ० अहौषम्। अहौष्व। अहौष्म॥ 10. लृङ्। अहोष्यत्॥

[२२०] ञि भी (भी) = भये। अक०। अनि०। पर०। to fear; to be anxious about.

1. लट्। प्र० बिभेति। बिभितः--बिभीतः। बिभ्यति॥ म० बिभेषि। बिभिथः--बिभीथः। बिभिथ--बिभीथ॥ उ० बिभेमि। बिभिवः--बिभीवः। बिभिमः--बिभीमः॥ 2. लोट्। प्र० बिभेतु--बिभितात्--बिभीतात्। बिभिताम्--बिभीताम्। बिभ्यतु॥ म० बिभिहि-बिभीहि--बिभितात्--बिभीतात्। बिभितम्--बिभीतम्। बिभित--बिभीत॥ उ० बिभयानि। बिभयाव। बिभयाम॥ 3. लङ्। प्र० अबिभेत्। अबिभिताम्--अबिभीताम्। अबिभयुः॥ म० अबिभेः। अबिभितम्--अबिभीतम्। अबिभित--अबिभीत॥ उ० अबिभयम्॥ अबिभिव--अबिभीव। अबिभिम--अबिभीम॥

4. विधि० । प्र० बिभियात्--बिभीयात् । बिभियाताम्--बिभीयाताम् । बिभियुः--बिभीयुः ॥

5. लिट् । प्र० बिभाय । बिभ्यतुः । बिभ्युः ॥ म० बिभयिथ--बिभेथ । बिभ्यथुः । बिभ्य । उ० बिभाय--बिभय । बिभ्यिव । बिभ्यिम ॥ 6. लुट् । भेता ॥ भेतासि ॥ 7. लृट् । भेष्यति ॥ 8. आशी० । भीयात् । भीयास्ताम् ॥ 9. लुङ् । VI. अभैषीत् । अभैष्टाम् । अभैषुः ॥ 10. लृङ् । अभेष्यत् ॥

[२२१] ह्री = लज्जायाम् । अक० । अनि० । पर० । to be ashamed of; to blush.

1. लट् । प्र० जिह्रेति । जिह्रीतः । जिह्रियति ॥ म० जिह्रेषि । जिह्रीथः । जिह्रीथ ॥ उ० जिह्रेमि । जिह्रीवः । जिह्रीमः ॥ 2. लोट् । प्र० जिह्रेतु--जिह्रीतात् । जिह्रीताम् । जिह्रियतु ॥ म० जिह्रीहि--जिह्रीतात् । जिह्रीतम् । जिह्रीत ॥ उ० जिह्रयाणि । जिह्रयाव । जिह्रयाम ॥ 3. लङ् । प्र० अजिह्रेत् । अजिह्रीताम् । अजिह्रयुः ॥ म० अजिह्रेः । अजिह्रीतम् । अजिह्रीत ॥ उ० अजिह्रयम् । अजिह्रीव । अजिह्रीम ॥ 4. विधि० । जिह्रयात् । जिह्रीयाताम् । जिह्रीयुः ॥ म० जिह्रीयाः । जिह्रीयातम् । जिह्रीयात ॥ उ० जिह्रीयाम् । जिह्रीयाव । जिह्रीयाम ॥

5. लिट् । प्र० जिह्राय । जिह्रियतुः । जिह्रियुः ॥ म० जिह्रयिथ--जिह्रेथ । जिह्रियथुः । जिह्रिय ॥ उ० जिह्राय--जिह्रय । जिह्रियिव । जिह्रियिम ॥ पक्षे--जिह्रयांचकार--जिह्रयांबभूव--जिह्रयामास इत्यादि ॥ 6. लुट् । ह्रेता । ह्रेतासि ॥ 7. लृट् । ह्रेष्यति ॥ 8. आशी० । ह्रीयात् । ह्रीयास्ताम् । ह्रीयासुः ॥ 9. लुङ् । VI. अह्रैषीत् । अह्रैष्टाम् । अह्रैषुः ॥ 10. लृङ् । अह्रेष्यत् ॥

[२२२] पॄ = पालनपूरणयोः । सक० । सेट्० । पर० । to protect ; to fill ;

1. लट् । प्र० पिपर्ति । पिपूर्तः । पिपुरति ॥ म० पिपर्षि । पिपूर्थः । पिपूर्थ ॥ उ० पिपर्मि । पिपूर्वः । पिपूर्मः ॥ 2. लोट् । प्र० पिपर्तु--पिपूर्तात् । पिपूर्ताम् । पिपुरतु ॥ म० पिपूर्हि--पिपूर्तात् । पिपूर्तम् । पिपूर्त ॥ उ० पिपराणि । पिपराव । पिपराम ॥ 3. लङ् । प्र० अपिपः । अपिपूर्ताम् । अपिपरुः । म० अपिपः । अपिपूर्तम् । अपिपूर्त ॥ उ० अपिपरम् । अपिपूर्व । अपिपूर्म ॥ 4. विधि० । प्र० पिपूर्यात् । पिपूर्याताम् । पिपूर्युः ॥

5. लिट् । प्र० पपार । पप्रतुः--पपरतुः । पप्रुः--पपरुः ॥ म० पपरिथ । पप्रथुः--पपरथुः । पप्र--पपर ॥ उ० पपार--पपर । पप्रिव--पपरिव । पप्रिम--पपरिम ॥ 6. लुट् ।

परिता--परीता ॥ 7. लृट्। परिष्यति--परीष्यति ॥ 8. आशी०। पूर्यात्। पूर्यास्ताम्॥ 9. लुङ्। VII. अपारीत्। अपारिष्टाम्। अपारिषुः॥ 10. लृङ्। अपरिष्यत्-अपरीष्यत्॥

[२२३] ओहाक् (हा) = त्यागे। सक०। अनि०। परस्मै०। to abandon; to resign; to let fall; to omit.

1. लट्। प्र० जहाति। जहितः--जहीतः। जहति॥ म० जहासि। जहिथः--जहीथः। जहिथ--जहीथ॥ उ० जहामि। जहिवः--जहीवः। जहिमः--जहीमः। 2. लोट्। प्र० जहातु--जहितात्--जहीतात्। जहिताम्--जहीताम्। जहतु॥ म० जहाहि--जहिहि--जहीहि। जहितात्- जहीतात्। जहितम्--जहीतम्। जहित--जहीत॥ उ० जहानि। जहाव। जहाम॥ 3. लङ्। प्र० अजहात्। अजहिताम्--अजहीताम्। अजहुः॥ म० अजहाः। अजहितम्--अजहीतम्। अजहित--अजहीत॥ उ० अजहाम्। अजहिव--अजहीव। अजहिम--अजहीम॥ 4. विधि०। जह्यात्। जह्याताम्। जह्युः॥

5. लिट्। प्र० जहौ। जहतुः। जहुः॥ म० जहिथ--जहाथ। जहथुः। जह॥ उ० जहौ। जहिव।

जहिम ॥ 6. लुट् । हाता ॥ हातासि ॥ 7. लृट् । हास्यति ।
8. आशी० । हेयात् । हेयास्ताम् ॥ 9. लुङ् । IV. प्र०
अहासीत् । अहासिष्टाम् ॥ 10. लृङ् । अहास्यत् ॥

[२२४] माङ्=(मा) माने शब्दे च । सक० । अनि० । आत्म० ।
to measure.

1. लट् । प्र० मिमीते । मिमाते । मिमते ॥ म० मिमीषे ।
मिमाथे । मिमीध्वे ॥ उ० मिमे । मिमीवहे । मिमीमहे ॥
2. लोट् । प्र० मिमीताम् । मिमाताम् । मिमताम् ॥
म० मिमीष्व । मिमाथाम् । मिमीध्वम् ॥ उ० मिमै ।
मिमावहै । मिमामहै ॥ 3. लङ् । प्र० अमिमीत । अमि-
माताम् । अमिमत ॥ म० अमिमीथाः । अमिमाथाम् । अमि-
मीध्वम् ॥ उ० अमिमि । अमिमीवहि । अमिमीमहि ॥
4. विधि० । प्र० मिमीत । मिमीयाताम् । मिमीरन् ॥
म० मिमीथाः । मिमीयाथाम् । मिमीध्वम् ॥ उ० मिमीय ।
मिमीवहि । मिमीमहि ॥

5. लिट् । प्र० ममे । ममाते । ममिरे ॥ म० ममिषे ।
ममाथे । ममिध्वे ॥ उ० ममे । ममिवहे । ममिमहे ॥
6. लुट् । माता । मातासे ॥ 7. लृट् । मास्यते ॥
8. आशी० । मासीष्ट । मासीयास्ताम् । मासीरन् ॥ 9.
लुङ् । X. अमास्त । अमासाताम् । अमासत ॥ 10.
लृङ् । अमास्यत ॥

[२२५] ओ हाङ् (हा) = गतौ। सक०। सेट्। आत्म०।
to go; to attain; to get. **माङ्** (२२४) धातुवत्॥
1. **लट्**। जिहीते॥ 2. **लोट्**। जिहीताम्॥ 3. **लङ्**। अजिहीत॥ 4. **विधि०**। जिहीत। जिहीयाताम्॥ 5. **लिट्**। जहे॥ 6. **लुट्**। हाता॥ हातासे॥ 7. **लृट्**। हास्यते॥ 8. **आशी०**। हासीष्ट॥ 9. **लुङ्**। X. अहास्त। अहासाताम्॥ 10. **लृङ्**। अहास्यत॥

[२२६] डु भृञ् (भृ) = धारणपोषणयोः। सक०। अनि०। उभ०।
to hold; to support.

**परस्मैपदे**—1. **लट्**। **प्र०** बिभर्ति। बिभृतः। बिभ्रति॥ **म०** बिभर्षि। बिभृथः। बिभृथ॥ **उ०** बिभर्मि। बिभृवः। बिभृमः॥ 2. **लोट्**। **प्र०** बिभर्तु--बिभृतात्। बिभृताम्। बिभ्रतु॥ **म०** बिभृहि--बिभृतात्। बिभृतम्। बिभृत॥ **उ०** बिभराणि। बिभराव। बिभराम॥ 3. **लङ्**। **प्र०** अबिभः। अबिभृताम्। अबिभरुः॥ **म०** अबिभः। अबिभृतम्। अबिभृत॥ **उ०** अबिभरम्। अबिभृव। अबिभृम॥ 4. **विधि०**। **प्र०** बिभृयात्। बिभृयाताम्। बिभृयुः॥ **म०** बिभृयाः। बिभृयातम्। बिभृयात॥ **उ०** बिभृयाम्। बिभृयाव। बिभृयाम॥

5. **लिट्**। **प्र०** बभार। बभ्रतुः। बभ्रुः॥ **म०**

बभर्थ । बभ्रथुः । बभ्र ॥ उ० बभार–बभर । बभृव । बभृम ॥ पक्षे—बिभरांचकार–बिभरांबभूव–बिभरामास ॥ 6. लुट् । भर्ता । भर्तासि ॥ 7. लृट् । भरिष्यति ॥ 8. आशी० । भ्रियात् । भ्रियास्ताम् ॥ 9. लुङ् । VI. अभार्षीत् । अभार्ष्टाम् ॥ 10. लृङ् । अभरिष्यत् ॥

आत्मनेपदे—1. लट् । प्र० बिभृते । बिभ्राते । बिभ्रते ॥ म० बिभृषे । बिभ्राथे । बिभृध्वे ॥ उ० बिभ्रे । बिभृवहे । बिभृमहे ॥ 2. लोट् । प्र० बिभृताम् । बिभ्राताम् । बिभ्रताम् । म० बिभृष्व । बिभ्राथाम् । बिभृध्वम् ॥ उ० बिभरै । बिभरावहै । बिभरामहै ॥ 3. लङ् । प्र० अबिभृत । अबिभ्राताम् । अबिभ्रत ॥ म० अबिभृथाः । अबिभ्राथाम् । अबिभृध्वम् ॥ उ० अबिभ्रि । अबिभृवहि । अबिभृमहि ॥ 4. विधि० । प्र० बिभ्रीत । बिभ्रीयाताम् । बिभ्रीरन् ॥ म० बिभ्रीथाः । बिभ्रीयाथाम् । बिभ्रीध्वम् ॥ उ० बिभ्रीय । बिभ्रीवहि । बिभ्रीमहि ॥

5. लिट् । प्र० बभ्रे । बभ्राते । बभ्रिरे ॥ म० बभृषे । बभ्राथे । बभृढ्वे ॥ उ० बभ्रे । बभृवहे । बभृमहे ॥ 6. लुट् । भर्ता । भर्तासे ॥ 7. लृट् । भरिष्यते ॥ 8. आशी० । प्र० भृषीष्ट । भृषीयास्ताम् । भृषीरन् ॥ म० भृषीढ्वम् ॥ 9. लुङ् । X. प्र० अभृत । अभृषाताम् । अभृषत ॥ म० अभृढ्वम् ॥ 10. लृङ् । अभरिष्यत ॥

[२२७] डु दाञ् (दा) = दाने । सक० । अनि० । उभ० ।
to give.

**परस्मैपदे**—1. लट् । प्र० । ददाति । दत्तः । ददति ॥ म० ददासि । दत्थः । दत्थ ॥ उ० ददामि । दद्वः । दद्मः ॥ 2. लोट् । प्र० ददातु–दत्तात् । दत्ताम् । ददतु ॥ म० देहि--दत्तात् । दत्तम् । दत्त ॥ उ० ददानि । ददाव । ददाम ॥ 3. लङ् । प्र० अददात् । अदत्ताम् । अददुः ॥ म० अददाः । अदत्तम् । अदत्त ॥ उ० अददाम् । अदद्व । अदद्म ॥ 4. विधि० । प्र० दद्यात् । दद्याताम् । दद्युः ॥

5. लिट् । प्र० ददौ । ददतुः । ददुः ॥ म० ददिथ--ददाथ । ददथुः । दद ॥ उ० ददौ । ददिव । ददिम ॥ 6. लुट् । दाता ॥ दातासि ॥ दातास्मि ॥ 7. लृट् । दास्यति ॥ 8. आशी० । देयात् । देयास्ताम् । देयासुः ॥ 9. लुङ् । 1. प्र० अदात् । अदाताम् । अदुः ॥ 10. लृङ् । अदास्यत् ॥

**आत्मनेपदे**–1. लट् । प्र० दत्ते । ददाते । ददते ॥ म० दत्से । ददाथे । दद्ध्वे ॥ उ० ददे । दद्वहे । दद्महे ॥ 2. लोट् । प्र० दत्ताम् । ददाताम् । ददताम् ॥ म० दत्स्व । ददाथाम् । दद्ध्वम् ॥ उ० ददै । ददावहै ।

ददामहै ॥ 3. लङ् । प्र० अदत्त । अददाताम् । अददत॥ म० अदत्थाः । अददाथाम् । अदद्ध्वम् ॥ उ० अददि । अदद्वहि । अदद्महि ॥ 4. विधि० । प्र० ददीत । ददीयाताम् । ददीरन् । म० ददीथाः । ददीयाथाम् । ददीध्वम् ॥ उ० ददीय । ददीवहि । ददीमहि ॥

5. लिट् । प्र० ददे । ददाते । ददिरे ॥ म० ददिषे । ददाथे । ददिध्वे ॥ उ० ददे । ददिवहे । ददिमहे ॥ 6. लुट् । दाता ॥ दातासे ॥ 7. लृट् । दास्यते । 8. आशी० । दासीष्ट । दासीयास्ताम् । 9. लुङ् । प्र० अदित । अदिषाताम् । अदिषत ॥ म० अदिढ्वम् ॥ 10. लृङ् । अदास्यत ॥

[२२८] डु धाञ् (धा) = धारणपोषणयोः । सक० । अनि० । उभ० । to put; to grant; to produce; to bear.

1. लट् । प्र० दधाति । धत्तः । दधति ॥ म० दधासि । धत्थः । धत्थ ॥ उ० दधामि । दध्वः । दध्मः ॥ 2. लोट् । प्र० दधातु–धत्तात् । धत्ताम् । दधतु ॥ म० [illegible]–धत्तात् । धत्तम् । धत्त ॥ उ० दधानि । दधाव । दधाम ॥ 3. लङ् । प्र० अदधात् । अधत्ताम् । अदधुः ॥ म० अदधाः । अधत्तम् । अधत्त ॥ उ० अदधाम् ।

अदध्व । अदध्म ॥ 4. **विधि०** । **प्र०** दध्यात् । दध्याताम् । दध्युः ॥

5. **लिट्** । **प्र०** दधौ । दधतुः इत्यादि डु **दाञ्** (२२७) धातुवत् । 6. **लुट्** । धाता ॥ 7. **लृट्** । धास्यति ॥ 8. **आशी०** । धेयात् । धेयास्ताम् ॥ 9. **लुङ्** । I. अधात् । अधाताम् । अधुः ॥ 10. **लृङ्** । अधास्यत् ॥

**आत्मनेपदे**—1. **लट्** । **प्र०** धत्ते । दधाते । दधते ॥ **म०** धत्से । दधाथे । धद्ध्वे ॥ **उ०** दधे । दध्वहे । दध्महे ॥ 2. **लोट्** । **प्र०** धत्ताम् । दधाताम् । दधताम् ॥ **म०** धत्स्व । दधाथाम् । धद्ध्वम् ॥ **उ०** दधै । दधावहै । दधामहै ॥ 3. **लङ्** । **प्र०** अधत्त । अदधाताम् । अदधत ॥ **म०** अधत्थाः । अदधाथाम् । अधद्ध्वम् ॥ **उ०** अदधि । अदध्वहि । अदध्महि ॥ 4. **विधि०** । **प्र०** दधीत । दधीयाताम् । दधीरन् ॥

5. **लिट्** । डु **दाञ्** (२२७) धातुवत् दधे इत्यादि ॥ 6. **लुट्** । धाता ॥ 7. **लृट्** । धास्यते ॥ 8. **आशी०** । धासीष्ट । धासीयास्ताम् । धासीरन् ॥ 9. **लुङ्** । X. **प्र०** अधित । अधिषाताम् । अधिषत ॥ **म०** अधिढ्वम् 10. **लृङ्** । अधास्यत ॥

[२२९] **णिजिर्** (निज्) = शौचपोषणयोः । सक० । अनि० । उभ० । to wash; to be purified; to nourish.

**परस्मैपदे**—1. लट् । प्र० नेनेक्ति । नेनिक्तः । नेनिजति ॥ म० नेनेक्षि । नेनिक्थः । नेनिक्थ ॥ उ० नेनेज्मि । नेनिज्वः । नेनिज्मः ॥ 2. लोट् । प्र० नेनेक्तु–नेनिक्तात् । नेनिक्ताम् । नेनिजतु ॥ म० नेनिग्धि–नेनिक्तात् । नेनिक्तम् । नेनिक्त ॥ उ० नेनिजानि । नेनिजाव । नेनिजाम ॥ 3. लङ् । प्र० अनेनेक् । अनेनिक्ताम् । अनेनिजुः ॥ म० अनेनेक् । अनेनिक्तम् । अनेनिक्त ॥ उ० अनेनिजम् । अनेनिज्व । अनेनिज्म ॥ 4. विधि० । प्र० नेनिज्यात् । नेनिज्याताम् । नेनिज्युः ॥

5. लिट् । प्र० निनेज । निनिजतुः । निनिजुः ॥ म० निनेजिथ । निनिजथुः । निनिज ॥ उ० निनेज । निनिजिव । निनिजिम ॥ 6. लुट् । नेक्ता ॥ नेक्तासि ॥ 7. लृट् । नेक्ष्यति ॥ 8. आशी० । निज्यात् । निज्यास्ताम् । निज्यासुः ॥ 9. लुङ् । VI. प्र० अनैक्षीत् । अनैक्ताम् । अनैक्षुः ॥ पक्षे II. अनिजत् । अनिजताम् । अनिजन् ॥ 10. लृङ् । अनेक्ष्यत् ॥

**आत्मनेपदे**—1. लट् । प्र० नेनिक्ते । नेनिजाते । नेनिजते ॥ म० नेनिक्षे । नेनिजाथे । नेनिग्ध्वे ॥ उ०

नेनिजे । नेनिज्वहे । नेनिज्महे ॥ 2. लोट् । प्र० नेनिक्ताम् । नेनिजाताम् । नेनिजताम् ॥ म० नेनिक्ष्व । नेनिजाथाम् । नेनिग्ध्वम् ॥ उ० नेनिजै । नेनिजावहै । नेनिजामहै ॥ 3. लङ् । प्र० अनेनिक्त । अनेनिजाताम् । अनेनिजत ॥ म० अनेनिक्थाः । अनेनिजाथाम् । अनेनिग्ध्वम् ॥ उ० अनेनिजि । अनेनिज्वहि । अनेनिज्महि ॥ 4. विधि० । प्र० नेनिजीत । नेनिजीयाताम् । नेनिजीरन् ॥

5. लिट् । प्र० निनिजे । निनिजाते । निनिजिरे ॥ म० निनिजिषे । निनिजाथे । निनिजिध्वे ॥ उ० निनिजे । निनिजिवहे । निनजिमहे ॥ 6. लुट् । नेक्ता । नेक्तासे ॥ 7. लृट् । नेक्ष्यते ॥ 8. आशी० । निक्षीष्ट । निक्षीयास्ताम् । निक्षीरन् ॥ 9. लुङ् । X. अनिक्त । अनिक्षाताम् । अनिक्षत ॥ 10. लृङ् । अनेक्ष्यत ॥

[२३०] विजिर् (विज्) = पृथग्भावे । अक० । अनि० । उभ० । to separate; to distinguish. णिजिर् (२२९) धातुवत् ॥ वेवेक्ति—वेविक्ते ॥

[२३१] विष्लृ (विष्) व्याप्तौ । सक० । अनि० । उभ० । to pervade; to surround.

1. लट् । प्र० वेवेष्टि । वेविष्टः । वेविषति ॥ म० वेवेक्षि । वेविष्ठः । वेविष्ठ । उ० वेवेष्मि । वेविष्वः ।

वेविष्मः ॥ 2. **लोट्** । **प्र०** वेवेष्टु–वेविष्टात् । वेविष्टाम् । वेविषतु ॥ **म०** वेविड्ढि--वेविष्टात् । वेविष्टम् । वेविष्ट ॥ **उ०** वेविषाणि । वेविषाव । वेविषाम ॥ 3. **लङ्** । **प्र०** अवेवेट् । अवेविष्टाम् । अवेविषुः ॥ **म०** अवेवेट् । अवेविष्टम् । अवेविष्ट ॥ **उ०** अवेविषम् । अवेविष्व । अवेविष्म ॥ 4. **विधि०** । **प्र०** वेविष्यात् । वेविष्याताम् । वेविष्युः ॥

5. **लिट्** । **प्र०** विवेष । विविषतुः । विविषुः ॥ **म०** विवेषिथ । विविषथुः । विविष ॥ **उ०** विवेष । विविषिव । विविषिम ॥ 6. **लुट्** । वेष्टा । वेष्टासि ॥ 7. **लृट्** । वेक्ष्यति ॥ 8. **आशी०** ; विष्यात् । विष्यास्ताम् । विष्यासुः ॥ 9. **लुङ्** । II. **प्र०** अविषत् । अविषताम् । अविषन् ॥ 10. **लृङ्** । अवेक्ष्यत् ॥

**आत्मनेपदे**—1. **लट्** । **प्र०** वेविष्टे । वेविषाते । वेविषते ॥ **म०** वेविक्षे । वेविषाथे । वेविड्ढ्वे ॥ **उ०** वेविषे । वेविष्वहे । वेविष्महे ॥ 2. **लोट्** । **प्र०** वेविष्टाम् । वेविषाताम् । वेविषताम् ॥ **म०** वेविक्ष्व । वेविषाथाम् । वेविड्ढ्वम् ॥ **उ०** वेविषै । वेविषावहै । वेविषामहै ॥ 3. **लङ्** । **प्र०** अवेविष्ट । अवेविषाताम् । अवेविषत ॥ **म०** अवेविष्ठाः । अवेविषाथाम् । अवेविड्ढ्वम् ॥ **उ०**

